मुनिवरयास्कविरचितानि—

# काव्यालंकारसूत्राणि

( व्रतिमङ्गलावृत्तिसमलङ्कृतानि )

प्रकाशकः

हरयाणा-साहित्य-संस्थानम्

गुरुकुलझज्जर, रोहतक

मुनिवरयास्कविरचितानि

# काव्यालङ्कार-सूत्राणि

( व्रतिमङ्गलावृत्तिसमलङ्कृतानि )



वृत्तिकारः

आर्यकवीन्द्रो मुनिमेधाव्रताचार्यः

प्रकाशकः—

हरयाणा-साहित्य-संस्थानम्

गुरुकुलझज्जर, रोहतक

प्रथमावृत्तौ १००० | विक्रमाब्दाः २०१८ दयानन्दाब्दाः १३८ | मूल्यम् १·२५ सपादरूप्यकम्

वृत्तिकारः—

**आर्यकवीन्द्रो मुनि मेधाव्रताचार्यः**

दयानन्ददिग्विजयमहाकाव्यप्रणेता

# सम्पादकस्य निवेदनम्

—:*:—

महर्षिणा दयानन्देन संस्कारविधौ वेदारम्भप्रकरणे गुरुकुलेषु ब्रह्मचारिणां ब्रह्मचारिणीनां च पठन-पाठनविधौ "यास्कमुनिकृतं काव्यालङ्कारसूत्रं वात्स्यायनमुनिकृतभाष्यसहितं" स्वीकृतम्। वात्स्यायनमुनिकृतभाष्ययुतं यास्कीयं काव्यालङ्कारसूत्रं त्वद्याप्यन्वेषणविषयीकृतमेवेति न नयनपथमारोहति।

धन्यवादार्हः खलु कविरखिलानन्दो येन वैदिकभाष्योपेतं यास्कमुनिप्रणीतं काव्यालङ्कारसूत्रं १९७० विक्रमाब्दे ( १९१४ खिस्ताब्दे ) प्रकाशितम्। तच्चापि साम्प्रतं दुर्लभमिति कृत्वा झज्जरगुरुकुलाचार्यैर्दयानन्दादिष्टपथानुगामिभिः श्रीमद्भिर्भगवान्देवमहाभागैः प्रेरितैर्मया च भृशमभ्यर्थितैः कविरत्नैर्मुनिमेधाव्रताचार्यैर्यास्कीयकाव्यालङ्कारसूत्रेष्वन्वर्थाभिधायिनीं वृत्तिं "व्रतिमङ्गलां" विरच्य महदुपकृतं छात्रसङ्घस्य।

प्राचीनेष्वलङ्कारग्रन्थेषु यास्कीयं काव्यालङ्कारसूत्रमेव सुसमीचीनम्। नात्राप्रासङ्गिकमुपवर्णितं, न च शृङ्गाररसलवोऽपि विद्यते, यदनुषङ्गादश्लीलतादोषः सम्भवेत्। वृत्तिश्चाप्यश्लीलोदाहरणविमुक्तैव विरचिता व्रतिमङ्गलाख्या व्रतिनां पाठोपयोगिनी, विशेषतो गुरुकुलेषु पाठ्यग्रन्थरूपेणाध्यापयितुमिति मन्ये।

एष्वेव सूत्रेषु वामनपण्डितविरचिता वृत्तिरेका समुपलभ्यते पञ्चभिरधिकरणैरुपनिबद्धा । तस्यां प्रथम-दशम-द्वादशाध्यायेषु दशसूत्राणां न्यूनता दृश्यते । वामनविरचिता वृत्तिर्नितान्ताश्लीलोदाहरणपरिपूर्णत्वाद् गुरुकुलगतब्रह्मचारिभिर्न शक्याऽध्येतुम् । तत्र च वामनकृतान्येतानि सूत्राणीत्यपि प्रत्यपादि । किमत्र तत्त्वमिति विदाङ्कुर्वन्त्वैतिह्यविदो विद्वांसः ।

व्रतिमङ्गलाया लेखने पण्डितधर्मव्रतवेदवाचस्पतिना, मुद्रणसञ्चिकानिर्माणे च पण्डितसुदर्शनदेवशास्त्रिणा यत् साहाय्यं प्रदत्तं तदर्थं तौ धन्यवादार्हौ ।

पिपठिषूणां स्मरणसौकर्याय ग्रन्थादौ सूत्रपाठः सूत्रविषयानुक्रमश्चापि मया निबद्धः । झटित्यभिमतविषयं द्रष्टुं प्रतिपृष्ठमुपवर्णितविषयशीर्षकं चापि विन्यस्तम् । सर्वथा चारुसम्पादनाय प्रयतमानेनापि यदि क्वचित् स्खलितं चेत् कविभिः संशोध्य पठनीयं पाठनीयं चेति निवेदयति—

वेदव्रतः शास्त्री
झज्जरगुरुकुलोपाचार्यः

८ । १० । १९६१ ई०

---

५८

# यास्कीय-काव्यालङ्कारसूत्राणां विषयानुक्रमः



## भवन्ति चात्र श्लोकाः—

[ १ ] अध्याये प्रथमे काव्यप्रयोजनपरीक्षणम् ।
[ २ ] अधिकारिविचारश्च द्वितीये रीतिनिश्चयः ॥ १ ॥
[ ३ ] काव्याङ्गकाव्यभेदानां तृतीये प्रतिपादनम् ।
[ ४ ] तुर्ये पदपदार्थानां दोषतत्त्वविवेचनम् ॥ २ ॥
[ ५ ] वाक्यवाक्यार्थदोषाणां पञ्चमे तु प्रपञ्चनम् ।
[ ६ ] गुणालङ्कारभेदस्तु षष्ठे शब्दगुणास्तथा ॥ ३ ॥
[ ७—८ ] सप्तमेऽर्थगुणाः, शब्दालङ्काराः पुनरष्टमे ।
[ ९—१० ] उपमा नवमे, तस्याः प्रपञ्चो दशमे भवेत् ॥ ४ ॥
[ ११—१२ ] काव्यस्यैकादशे संविद्, द्वादशे शब्दशोधनम् ॥५॥

गुरुकुल झज्जर का मासिक मुख पत्र

वैदिक सिद्धान्तों का प्रबल प्रतिपादक

गंभीर विषयों का सरल विवेचन करने वाला

# सुधारक

अवश्य मंगाइए

और

स्वाध्याय करके अपने ज्ञान में वृद्धि कीजिए

वार्षिक मूल्य ३.००

पता—गुरुकुल झज्जर,
जि० रोहतक ।

# यास्कीय-काव्यालङ्कारसूत्रपाठः

## प्रथमोऽध्यायः

१ अथ काव्यालङ्काराः ।

२ लौकिकवैदिकास्ते ।

३ शब्दार्थोभयविधत्वात् ।

४ गुणालङ्कारसङ्गतावदुष्टौ रसवच्छब्दार्थौ काव्यम् ।

५ तद् ग्राह्यमलङ्कारात् ।

६ सौन्दर्यमलङ्कारः ।

७ स, दोषगुणालङ्कारहानादानाभ्याम् ।

८ शास्त्रतस्ते ।

९ काव्यं सद्दृष्टादृष्टार्थं प्रीतिकीर्तिहेतुत्वात् ।

इति काव्यालङ्कारसूत्रे प्रयोजनविवेचनं नाम प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः

१ अरोचकिनः सतृणाभ्यवहारिणश्च कवयः ।

२ पूर्वे शिष्याः, विवेकित्वात् ।

३ नेतरे, तद्विपर्ययात् ।

४ न शास्त्रमद्रव्येष्वर्थवत् ।

५ न कतकं पङ्कप्रसादनाय ।

६ रीतिरात्मा काव्यस्य ।

७ विशिष्टा पदरचना रीतिः ।

८ विशेषो गुणात्मा ।

९ सा त्रिधा, वैदर्भी गौडीया पाञ्चाली च ।

१० विदर्भादिषु दृष्टत्वात्तत्समाख्या ।

११ समग्रगुणा वैदर्भी ।

१२ ओजःकान्तिमती गौडीया ।

१३ माधुर्यसौकुमार्योपपन्ना पाञ्चाली ।

१४ तासां पूर्वा ग्राह्या गुणसाकल्यात् ।

१५ न पुनरितरे, स्तोकगुणत्वात् ।

१६ तदारोहणार्थमितराभ्यास इत्येके ।

१७ तत्तु न, अतत्त्वशीलस्य तत्त्वाऽनिष्पत्तेः ।

१८ न शणसूत्रवानाभ्यासे त्रसरसूत्रवाने वैचित्र्यलाभः ।

१९ सापि समासाभावे शुद्धवैदर्भी ।

२० तस्यामर्थगुणसम्पदास्वाद्या ।

२१ तदुपारोहादर्थ गुणलेशोऽपि ।

२२ सापि वैदर्भी तात्स्थ्यात् ।

इति काव्यालङ्कारसूत्रे रीतिनिश्चयो नाम द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः

१ लोको[1] विद्या[2] प्रकीर्णं[3] च काव्याङ्गानि ।

२ लोकवृत्तं लोकः ।

३ शब्दस्मृत्य[1]भिधानकोष[2]च्छन्दो[3]विचिति[4]कला[5]कामशास्त्र[6]दण्डनीतिपूर्वा विद्या ।

४ शब्दस्मृतेः शब्दशुद्धिः ।

५ अभिधानकोषतः पदार्थनिश्चयः ।

६ छन्दोविचितेर्वृत्तसंशयच्छेदः ।

७ कलाशास्त्रेभ्यः कलातत्त्वस्य संवित् ।

८ कामशास्त्रतः कामोपचारस्य ।

९ दण्डनीतेर्नयाऽपनययोः ।

१० इतिवृत्तकुटिलत्वं च ततः ।

११ लक्ष्यज्ञत्व[1]मभियोगो[2] वृद्धसेवा[3]ऽवेक्षणं[4]प्रतिभान[5]मवधानं[6] च प्रकीर्णम् ।

१२ तत्र काव्यपरिचयो लक्ष्यज्ञत्वम् ।

१३ काव्यबन्धोद्यमोऽभियोगः ।

१४ काव्योपदेशगुरुशुश्रूषणं वृद्धसेवा ।

१५ पदाधानोद्धरणमवेक्षणम् ।

१६ कवित्वबीजं प्रतिभानम् ।

१७ चित्तैकाग्र्यमवधानम् ।

१८ तद्देशकालाभ्याम् ।

१९ विविक्तो देशः ।

२० रात्रियामस्तुरीयः कालः ।

२१ काव्यं गद्यं[1] पद्यं[2] च ।

२२ गद्यं-वृत्तगन्धि[1]चूर्ण[2]मुत्कलिका[3]प्रायं च ।

२३ पद्यभागवद् वृत्तगन्धि ।

२४ अनाविद्धललितपदं चूर्णम् ।

२५ विपरीतमुत्कलिकाप्रायम् ।

२६ पद्यमनेकभेदम् ।

२७ तद[1]निबद्धं निबद्धं[2] च ।

२८ क्रमसिद्धिस्तयोः स्रगुत्तंसवत् ।

२९ नाऽनिबद्धं चकास्त्येकतेजः परमाणुवत् ।

३० सन्दर्भेषु दशरूपकं श्रेयः ।

३१ तद्धि चित्रं चित्रपटवद्विशेषसाकल्यात् ।

३२ ततोऽन्यभेदक्लृप्तिः ।

इति काव्यालङ्कारसूत्रे काव्याङ्गविवेचनं नाम तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः

१ गुणविपर्ययात्मानो दोषाः ।

२ अर्थतस्तदवगमः ।

३ सौकर्याय प्रपञ्चः ।

४ दुष्टं पदमसाधु[1] कष्टं[2] ग्राम्यम[3]-प्रतीतम[4]नर्थकं[5] च ।

५ शब्दस्मृतिविरुद्धमसाधु ।

६ श्रुतिविरसं कष्टम् ।

७ लोकमात्रप्रयुक्तं ग्राम्यम् ।

८ शास्त्रमात्रप्रयुक्तमप्रतीतम् ।

९ पूरणार्थमनर्थकम् ।

१० अन्यार्थ[1]नेय[2]गूढार्था[3]श्लील[4]क्लि-ष्टा[5]नि च ।

११ रूढिच्युतमन्यार्थम् ।

१२ कल्पितार्थं नेयार्थम् ।

१३ अप्रसिद्धार्थप्रयुक्तं गूढार्थम् ।

१४ असभ्यार्था[1]न्तरमसभ्यस्मृतिहेतु[2]-श्चाऽश्लीलम् ।

१५ न गुप्त[1]लक्षित[2]संवृता[3]नि ।

१६ अप्रसिद्धाऽसभ्यं गुप्तम् ।

१७ लाक्षणिकासभ्यान्वितं लक्षि-तम् ।

१८ लोकसंवीतं संवृतम् ।

१९ व्रीडाजुगुप्साऽमङ्गलातङ्कदायि-भेदात् ।

२० व्यवहितार्थप्रत्ययं क्लिष्टम् ।

२१ अरूढार्थत्वात् ।

२२ अन्याभ्यां वाक्यं व्याख्यातम् ।

इति काव्यालङ्कारसूत्रे पद-पदार्थदोष-निरूपणं नाम चतुर्थोऽध्यायः ॥४॥

## पञ्चमोऽध्यायः

१ भिन्नवृत्त[1]यतिभ्रष्ट[2]विसन्धी[3]नि वाक्यानि ।

२ स्वलक्षणच्युतवृत्तं भिन्नवृत्तम् ।

३ विरसविरामं यतिभ्रष्टम् ।

४ तद्धातु-नामभागभेदे स्वरसन्ध्य-करणे प्रायेण ।

५ न वृत्तदोषात् पृथग् यतिदोषो वृत्तस्य यत्यात्मकत्वात् ।

६ न लक्ष्मणः पृथक्त्वात् ।

७ विरूपपदसन्धिर्विसन्धिः ।

८ पदसन्धिवैरूप्यं विश्लेषोऽ-श्लीलत्वं कष्टत्वं च ।

९ व्यर्थै[1]कार्थ[2]सन्दिग्धा[3]ऽप्रयुक्ता[4]ऽ-पक्रम[5]लोकविद्याविरुद्धा[6]नि च ।

१० व्याहतपूर्वोत्तरार्थं व्यर्थम् ।

११ उक्तार्थपदमेकार्थम् ।

१२ न विशेषश्चेत् ।

१३ धनुर्ज्याध्वनौ धनुः श्रुतिरारूढेः प्रतिपत्त्यै ।

१४ कर्णावतंसश्रवणकुण्डलशिरःशेखरेषु कर्णादिनिर्देशः सन्निधेः ।

१५ मुक्ताहारशब्दे मुक्ताशब्दः शुद्धेः ।

१६ पुष्पमालाशब्दे पुष्पपदमुत्कर्षस्य ।

१७ करिकलभशब्दे करिशब्दस्ताद्रूप्यस्य प्रतिपत्त्यर्थम् ।

१८ विशेषणस्य च ।

१९ तदिदं प्रयुक्तेषु ।

२० संशयकृत् सन्दिग्धम् ।

२१ मायादिकल्पितार्थमप्रयुक्तम् ।

२२ क्रमहीनार्थमपक्रमम् ।

२३ देशकालस्वभावविरुद्धार्थानि लोकविरुद्धानि ।

२४ कलाचतुर्वर्गशास्त्रविरुद्धार्थानि विद्याविरुद्धानि ।

इति काव्यालङ्कारसूत्रे वाक्यवाक्यार्थदोषविवेचनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः

१ काव्यशोभायाः कर्त्तारो धर्मा गुणाः ।

२ तदतिशयहेतवस्त्वलङ्काराः ।

३ पूर्वे नित्याः ।

४ ओजः[1] प्रसाद[2]श्लेष[3]समता[4] समाधि[5]माधुर्य[6]सौकुमार्यो[7]दारता[8]ऽर्थव्यक्ति[9]कान्तयो[10] बन्धगुणाः ।

५ गाढबन्धत्वमोजः ।

६ शैथिल्यं प्रसादः ।

७ गुणः सम्प्लवात् ।

८ न शुद्धः ।

९ स त्वनुभवसिद्धः ।

१० साम्योत्कर्षौ च ।

११ मसृणत्वं श्लेषः ।

१२ मार्गाऽभेदः समता ।

१३ आरोहावरोहक्रमः समाधिः ।

१४ न पृथगारोहावरोहयोरोजःप्रसादरूपत्वात् ।

१५ न सम्पृक्तत्वात् ।

१६ अनैकान्त्याच्च ।

१७ ओजः प्रसादयोः क्वचिद्भागे तीव्रावस्थायां ताविति चेदभ्युपगमः ।

१८ विशेषापेक्षत्वात्तयोः ।

१९ आरोहावरोहनिमित्तं समाधिराख्यायते ।

२० क्रमविधानार्थत्वाद्वा ।

२१ पृथक्पदत्वं माधुर्यम् ।

२२ अजठरत्वं सौकुमार्यम् ।

२३ विकटत्वमुदारता ।

२४ अर्थव्यक्तिहेतुत्वमर्थव्यक्तिः ।
२५ औज्ज्वल्यं कान्तिः ।
२६ नासन्तः सद्वेद्यत्वात् ।
२७ न भ्रान्ता निष्कम्पत्वात् ।
२८ न पाठधर्माः सर्वत्रादृष्टेः ।

इति काव्यालङ्कारसूत्रे शब्दगुण-विवेचनं नाम षष्ठोऽध्यायः ॥६॥

## सप्तमोऽध्यायः

१ त एवार्थगुणाः ।
२ अर्थस्य प्रौढिरोजः ।
३ अर्थवैमल्यं प्रसादः ।
४ घटना श्लेषः ।
५ अवैषम्यं समता ।
६ सुगमत्वं वाऽवैषम्यमिति ।
७ अर्थदृष्टिः समाधिः ।
८ अर्थो द्विविधोऽयोनिरन्यच्छायायोनिश्च ।
९ आद्यो व्यक्तः सूक्ष्मश्च ।
१० सूक्ष्मो भाव्यो वासनीयश्च ।
११ उक्तिवैचित्र्यं माधुर्यम् ।
१२ अपारुष्यं सौकुमार्यम् ।
१३ अग्राम्यत्वमुदारता ।
१४ वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः ।
१५ दीप्तरसत्वं कान्तिः ।

इति काव्यालङ्कारसूत्रे-अर्थगुणविवेचनं नाम सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः

१ पदमनेकार्थमक्षरं वाऽऽवृत्तं स्थाननियमे यमकम् ।
२ पादः पादस्यैकस्यानेकस्य चादि-मध्यान्तभागाः स्थानानि ।
३ भङ्गादुत्कर्षः ।
४ श्रृङ्खला[1] परिवर्तक[2]श्चूर्ण[3]मिति भङ्गमार्गाः ।
५ वर्णविच्छेदचलनं श्रृङ्खला ।
६ सङ्गविनिवृत्तौ स्वरूपापत्तिः परिवर्तकः ।
७ पिण्डाक्षरलोपे स्वरूपलोपश्चूर्णम् ।
८ शेषः सरूपोऽनुप्रासः ।
९ अनुल्बणो वर्णानुप्रासः श्रेयान् ।
१० पादानुप्रासः पादयमकवत् ।

इति काव्यालङ्कारसूत्रे शब्दालङ्कार-विवेचनं नामाऽष्टमोऽध्यायः ॥८॥

## नवमोऽध्यायः

१ उपमानोपमेययोर्गुणलेशतः साम्यमुपमा ।
२ गुणबाहुल्यतश्च कल्पिता ।
३ तद्द्वैविध्यं पदवाक्यार्थवृत्तिभेदात् ।
४ सा पूर्णा लुप्ता च ।

५ गुणद्योतकोपमानोपमेयशब्दानां सामग्र्ये पूर्णा ।

६ लोपे लुप्ता ।

७ स्तुतिनिन्दातत्त्वाख्यानेषु ।

८ हीनत्वाधिकत्वलिङ्गवचनभेदाऽसादृश्याऽसम्भवास्तद्दोषाः ।

९ जातिप्रमाणधर्मन्यूनतोपमानस्य हीनत्वम् ।

१० ऐकान्त्यात्तेनाधिकत्वं व्याख्यातम् ।

११ धर्मयोरेकनिर्देशेऽन्यस्य संवित् साहचर्यात् ।

१२ उपमानोपमेययोर्लिङ्गव्यत्यासो लिङ्गभेदः ।

१३ इष्टः पुन्नपुंसकयोः प्रायेण ।

१४ लौकिक्यां समासाभिहितायामुपमाप्रपञ्चे च ।

१५ तेन वचनभेदो व्याख्यातः ।

१६ अप्रतीतगुणसादृश्यमसादृश्यम् ।

१७ असादृश्यहताह्युपमा तन्निष्ठाश्च कवयः ।

१८ उपमानाधिक्यात्तदपोह इत्येके ।

१९ नाऽपुष्टार्थत्वात् ।

२० अनुपपत्तिरसम्भवः ।

२१ न विरुद्धोऽतिशयः ।

इति काव्यालङ्कारसूत्रे-उपमालङ्कार-विवेचनं नाम नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः

१ प्रतिवस्तुप्रभृतिरुपमाप्रपञ्चः ।

२ उपमेयस्योक्तौ समानवस्तुन्यासः प्रतिवस्तु ।

३ अनुक्तौ समासोक्तिः ।

४ किञ्चिदुक्तावप्रस्तुतप्रशंसा ।

५ समेन वस्तुनाऽन्यापलापोऽपह्नुतिः ।

६ उपमानोपमेयस्य गुणसाम्यात्तत्त्वारोपो रूपकम् ।

७ सधर्मेषु तन्त्रप्रयोगः श्लेषः ।

८ सादृश्याल्लक्षणा वक्रोक्तिः ।

९ अतद्रूपस्यान्यथाऽध्यवसानमतिशयार्थमुत्प्रेक्षा ।

१० लोके सम्भाव्यधर्मस्य तदुत्कर्षकल्पनाऽतिशयोक्तिः ।

११ उपमानोपमेयसंशयः सन्देहः ।

१२ विरुद्धाभासत्वं विरोधः ।

१३ क्रियाप्रतिषेधे प्रसिद्धतत्फलव्यक्तिर्विभावना ।

१४ एकस्योपमेयत्वोपमानत्वेऽनन्वयः ।

१५ क्रमेणोपमेयोपमा ।

१६ समविसदृशाभ्यां परिवर्तनं परिवृत्तिः ।

१७ उपमेयोपमानां क्रमसम्बन्धः क्रमः ।

१८ अनुषङ्गत उपमानोपमेयवाक्येष्वेका क्रिया दीपकम् ।

१९ तत् त्रिविधमादिमध्यान्तवाक्यवृत्तिभेदात् ।

२० क्रिययैव स्वगतार्थान्वयख्यापनं निदर्शनम् ।

२१ उक्तसिद्ध्यै वस्तुनोऽर्थान्तरस्यैव न्यसनमर्थान्तरन्यासः ।

२२ उपमेयस्य गुणातिरेकत्वं व्यतिरेकः ।

२३ एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः ।

२४ सम्भाव्यविशिष्टकर्माकरणान्निन्दास्तोत्रार्था व्याजस्तुतिः ।

२५ व्याजस्य सत्यसारूप्यं व्याजोक्तिः ।

२६ विशिष्टेन साम्यार्थमेककालक्रियायोगस्तुल्ययोगिता ।

२७ उपमानाक्षेपश्चाक्षेपः ।

२८ वस्तुद्वयक्रिययोस्तुल्यकालयोरेकपदाभिधानं सहोक्तिः ।

२९ यत्सादृश्यं तत्सम्पत्तिः समाहितम् ।

३० स्वगुणविसर्गेऽन्यगुणादानं तद्गुणः ।

३१ यथोत्तरमुत्कर्षः सारम् ।

३२ कर्त्तव्ये कार्ये दैवसहायः समाधिः ।

३३ हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गम् ।

३४ आरोप्यमाणमुत्सृज्य प्रकृतस्थापनं निश्चयः ।

३५ अलङ्कारस्यालङ्कारयोगित्वं संसृष्टिः ।

३६ तद्भेदावुपमारूपकोत्प्रेक्षावयवौ ।

३७ उत्प्रेक्षाहेतुरुत्प्रेक्षावयवः ।

इति काव्यालङ्कारसूत्रे उभयालङ्कारविवेचनं नाम दशमोऽध्यायः ॥१०॥

## एकादशोऽध्यायः

१ नैकं पदं द्विः प्रयोज्यं प्रायेण ।

२ नित्यं संहितैकपदवत्पादेष्वर्द्धान्तवर्जम् ।

३ न पादान्तलघोर्गुरुत्वं च सर्वत्र ।

४ न गद्ये समाप्तप्रायं वृत्तमन्यत्रोद्गतादिभ्यः संवादात् ।

५ न पादादौ खल्वादयः ।

६ नार्द्धे किञ्चिदसमाप्तप्रायं वाक्यम् ।

७ न कर्मधारयो बहुव्रीहिप्रतिपत्तिकरः ।

८ तेन विपर्ययो व्याख्यातः ।

९ सम्भाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ ।

१० विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ ।

११ सर्वनाम्नाऽनुसन्धिर्वृत्तिच्छन्नस्य ।

१२ सम्बन्धसम्बन्धेऽपि षष्ठी क्वचित् ।

१३ अतिप्रयुक्तं देशभाषापदम् ।

१४ लिङ्गाध्याहारौ ।

१५ लक्षणाशब्दाश्च ।

१६ न बद्धाहुल्यमेकत्र ।

१७ स्तनादीनां द्वित्वाविष्टा जातिः प्रायेण ।

इति काव्यालङ्कारसूत्रे काव्यस्यप्रधाननियमविवेचनं नामैकादशोऽध्यायः ॥११॥

## द्वादशोऽध्यायः

१ रुद्रावित्येकशेषोऽन्वेष्यः ।

२ मिलिक्लविचपिप्रभृतीनां धातुत्वं धातुगणस्याऽसमाप्तेः ।

३ वलेरात्मनेपदमनित्यं ज्ञापकात् ।

४ चक्षिङोऽनुबन्धकरणम् ।

५ क्षीयत इति कर्मकर्तरि ।

६ स्विद्यत इति च ।

७ मार्गेरात्मनेपदमलक्ष्म ।

८ लोलमानादयश्चानशि ।

९ लभेर्गत्यर्थत्वाण्णिच्यणौ कर्तुः कर्मत्वाकर्मत्वे ।

१० ते मे शब्दौ निपातेषु ।

११ तिरस्कृत इति परिभूतेऽन्तर्ध्युपचारात् ।

१२ नैकशब्दः सुप्सुपेति समासात् ।

१३ मधुपिपासुप्रभृतीनां समासो गमिगाम्यादिषु पाठात् ।

१४ त्रिबलीशब्दः सिद्धः सञ्ज्ञा चेत् ।

१५ बिम्बाधर इति वृत्तौ मध्यमपदलोपिन्याम् ।

१६ आमूललोलादिषु वृत्तिर्विस्पष्टपटुवत् ।

१७ न धान्यषष्ठादिषु षष्ठीसमासप्रतिषेधः पूरणेनान्यतद्धितान्तत्वात् ।

१८ पत्रपीतिमादिषु गुणवचनेन ।

१९ अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः ।

२० हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदात् ।

२१ पूर्वनिपातेऽपभ्रंशो रक्ष्यः ।

२२ निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः परिगणनस्य प्रायिकत्वात् ।

२३ शक्यमिति रूपं विलिङ्गवचनस्यापि क्रमाभिधायां सामान्योपक्रमात् ।

२४ हानिवदाधिक्यमप्यङ्गानां विकारः ।

२५ न कृमिकीटानामित्येकवद्भाव-प्रसङ्गात् ।

२६ न खरोष्ट्रावुष्ट्रखराविति पाठात् ।

२७ आसेत्यसतेः ।

२८ युध्येदिति युधः क्यचि ।

२९ विरलायमानादिषु क्यङ् निरूप्यः ।

३० अहेतौ हन्तेर्णिच् चुरादिपाठात् ।

३१ अनुचरीति चरेष्टित्वात् ।

३२ केसरालमित्यलतेरणि ।

३३ पत्रलमिति लातेः के ।

३४ महीध्रादयो मूलविभुजादिदर्शनात् ।

३५ ब्रह्मादिषु हन्तेर्नियमादरिहाद्यसिद्धिः ।

३६ ब्रह्मविदादयः कृदन्तवृत्त्या ।

३७ तैर्महीधरादयो व्याख्याताः ।

३८ भिदुरादयः कर्मकर्त्तरि कर्त्तरि च ।

३९ गुणविस्तरादयश्चिन्त्याः ।

४० अवतरावचायशब्दयोर्दीर्घह्रस्वत्वव्यत्यासो बालानाम् ।

४१ शोभेति निपातनात् ।

४२ अविधौ गुरोः स्त्रियां बहुलंविवक्षा ।

४३ व्यवसितादिषु क्तः कर्त्तरि चकारात् ।

४४ आहेति भूतेऽन्यलडन्तभ्रमाद् ब्रुवो लटि ।

४५ शबलादिभ्यः स्त्रियां टापोऽप्राप्तिः ।

४६ प्राणिनि नीलेति नित्यम् ।

४७ मनुष्यजातेर्विवक्षाऽविवक्षे ।

४८ ऊकारान्तादप्यूङ्प्रवृत्तेः ।

४९ कार्तिकीय इति ठञ् दुर्धरः ।

५० शार्वरमिति च ।

५१ शाश्वतमिति प्रयुक्तेः ।

५२ राजवंश्यादयः साध्वर्थे ये भवन्ति ।

५३ दारवशब्दो दुष्प्रयुक्तः ।

५४ मुग्धिमादिष्विमनिज् मृग्यः ।

५५ औपम्यादयश्चातुर्वर्ण्यवत् ।

५६ ष्यञः षित्करणादीकारो बहुलम् ।

५७ सामग्र्यमित्यादिषु विकल्पेन ।

५८ धन्वीति व्रीह्यादिषु पाठात् ।

५९ चतुरस्रशोभीति णिनौ ।

६० कञ्चुकीया इति क्यचि ।

६१ बौद्धप्रतियोग्यपेक्षायामप्यातिशायनिकाः ।

६२ कौशिलादय इलचि वर्णलोपात् ।

६३ मौक्तिकमिति विनयादिपाठात् ।

६४ प्रतिभादयः प्रतिज्ञादिषु ।

६५ न सरजसमित्यनव्ययीभावे ।

६६ न धृतधनुषीत्यसञ्ज्ञायाम् ।

६७ दुर्गन्धिपद इद्दुर्लभः ।

६८ सुदत्यादयः प्रतिविधेयाः ।

६९ व्यूढोरस्क इति न कप् तदन्तविधिप्रतिषेधात् ।

७० अवैहीति वृद्धिरवद्या ।

७१ अपाङ्गनेत्रेति लुगलभ्यः ।

७२ नेष्टाः श्लिष्टप्रियादयः पुंवद्भावप्रतिषेधात् ।

७३ दृढभक्तिरसौ सर्वत्रेति ।

७४ जलजम्बुलतादयो ह्रस्वविधेः ।

७५ तिलकादयोऽजिरादिषु ।

७६ निशम्यनिशमय्यशब्दौ प्रकृतिभेदात् ।

७७ संयम्यनियमय्यशब्दावणिजन्तत्वात् ।

७८ प्रपीयेति पीङः ।

७९ दूरयतीति बहुलग्रहणात् ।

८० गच्छतीप्रभृतिष्वनिषेध्यो नुम् ।

८१ मित्रेण गोप्त्रेति पुंवद्भावात् ।

८२ वेत्स्यसीति पदभङ्गात् ।

८३ कामयानशब्दः सिद्धोऽनादिश्चेत् ।

८४ सौहृददौर्हृदशब्दावणि हृद्भावात् ।

८५ विरमेति निपातनात् ।

८६ उपर्यादिषु सामीप्ये द्विरुक्तेषु द्वितीया ।

८७ मन्दम्मन्दमित्यप्रकारार्थत्वे ।

८८ न निद्राद्रुगिति भष्भावप्राप्तेः ।

८९ निष्यन्द इति षत्वं चिन्त्यम् ।

९० नाङ्गुलिसङ्ग इति मूर्धन्यविधेः ।

९१ तेनावन्तिसेनादयः प्रत्युक्ताः ।

९२ नेन्द्रवाहने णत्वमाहितत्वस्याऽविवक्षितत्वात् ।

इति यास्कीये काव्यालङ्कारसूत्रे शब्दशुद्धिविवेचनं नाम द्वादशोऽध्यायः ॥१२॥

॥ समाप्तोऽयं सूत्रपाठः ॥

## काव्यालङ्कारसूत्राणां परिगणनम्

| अध्यायः | सूत्राणि |
|---|---|
| १ | ९ |
| २ | २२ |
| ३ | ३२ |
| ४ | २२ |
| ५ | २४ |
| ६ | २८ |
| ७ | १५ |
| ८ | १० |
| ९ | २१ |
| १० | ३७ |
| ११ | १७ |
| १२ | ९२ |
| सर्वयोगः | ३२९ |

# ईषत्प्रास्ताविकम्

प्रास्ताविकं किञ्चिदिदं विलिख्यते,
मेधाव्रताचार्यमुनेर्निदेशतः ।
साहित्यशास्त्रस्य गुरोरनुग्रहाद्,
धर्मव्रतेन व्रतिना मयाऽधुना ॥ १ ॥
अयं प्रयासः प्रथमो विधीयते,
गिराऽमराणां लघुलेखने बुधाः ! ।
यदि त्रुटिः स्यात्त्वमयाऽनुगृह्यता—
मयं व्रती झज्जरसद्गुरौ वसन् ॥ २ ॥

न च न विदन्ति साहित्यधुरन्धरा विद्वद्वरास्तत्रभवन्तो भवन्तो यत्काव्यशास्त्रालङ्कारपिपठिषूणां ब्रह्मचर्यजुषां कुमाराणां कुमारीणाञ्च काव्यालङ्कारावगमायानश्लीलालङ्कारोदाहरणालङ्कृता काचन सद्वृत्तिर्न याति लोचनगोचरतामिति विमृश्यास्मत्पूज्यचरणैर्भगवान्देव इति विश्रुतैर्गुरुचरणैरभ्यर्थिता गुरुकुलसहायकमुख्याधिष्ठात्रा भ्रात्रा व्रतिवर्येण श्रीवेदव्रतशास्त्रिणा चापि मुहुर्मुहुः प्रार्थनाविषयीकृता इमे पुण्यकीर्त्तय आर्यकवीन्द्रा मुनिश्रीमन्मेधाव्रताचार्याः काव्यालङ्कारसूत्राण्यधिकृत्य "व्रतिमङ्गलाख्यां" व्याख्यां व्यरचयन्मञ्जुलां विमलां सहृदयहृदयमनोहरां ब्रह्मचारिबालानां नितरां हितार्थम् ।

पुराकल्पे निरुक्तप्रणेता भगवान् यास्काचार्यः शब्दजातं विवृण्वन् वेदगतानलङ्कारानपि स्वयमेव विवरीतुमभिलषन् "काव्यालङ्कारसूत्राणि" विरचयामासेति प्राचीनसमस्तविद्वदनुमतमासीत् । "संस्कारविध्य"न्तर्गते पठनपाठनविधौ कुत्र कुत्र विषये किं किमध्येतव्यमिति विमृशद्भिः श्री १०८ पूज्यपादैर्वेदार्थप्रकाशकैः संसारोद्धारकैश्छात्रोपकारकैरादित्यब्रह्मचारिभिर्यतीन्द्रैर्दयानन्दसरस्वतीजगद्गुरुभिरपि यास्कमुनिप्रणीतं "काव्यालङ्कारसूत्रं"

ब्रह्मचारिभिः पठनीयमिति स्वीकृतमेवाभूत् । कविरत्नाखिलानन्दशर्मप्रणीतं वैदिकभाष्योपेतं काव्यालङ्कारसूत्रमिदानीं दुर्लभमलभ्यमिति मत्वा श्रीमुनि-मेधाव्रताचार्यैः प्रणीतां व्रतिमङ्गलाख्यामन्वर्थाख्यां वृत्तिं प्रकाशयितुं बद्ध-परिकरा अस्मदाचार्यचरणा गुरुकुलगतानामार्यविद्यालयानामखिलानां वा संस्थानां कुमारवृन्दानामुपकारायेति हर्षविषयोऽयमार्याणाम्मनोभावना-संसिद्धये ।

अत्र पाठकोपाह्वस्य श्रीशङ्करदेवोपाध्यायस्य काव्यतीर्थस्य वृन्दावनगुरु-कुलमुख्याध्यापकस्य कुमुदिनीचन्द्रमुपन्यासमुद्दिश्य यत् किञ्चिन्नम्रनिवेदनमस्ति तस्माद् "ग्रन्थकर्तुः परिचय"मुद्धृत्य पाठकानां ज्ञानाय विन्यस्यामि—

## "ग्रन्थकर्तुः परिचयः ।"

"अस्ति महाराष्ट्रेषु श्रीरामचन्द्रपदारविन्दपवित्रितपुलिनप्रदेशाया जनकनन्दिनीकौतुककेलिकरपुण्यपरिसरारण्यायाः सरितां वरेण्याया गोदा-वर्यास्तीरे तपोधनानां शरण्यमिव पुण्यं नासिकाभिधं तीर्थमित्रं महाक्षेत्र-स्थानम् । यदन्तर्गतमगस्त्यमुनिरचिताश्रमपदरमणीयस्य नीलमेघश्यामल-शिखरस्यागस्त्यशैलस्यानतिदूरेऽन्वगस्तितीरं चकास्ति महाहर्म्यरुचिरं येवला-नामकं नगरम् । यत्र वसति स्म पुरा खलु—

श्रीरामचन्द्रलवनन्दनवंशसिन्धो—<br>
रुद्भूतरत्नमतिचारुचरित्रबन्धोः ।<br>
श्रेयः श्रियोः पदममन्दनिरस्ततन्द्रः<br>
"श्रीक्षेमचन्द्र" इति विश्रुतकीर्त्तिचन्द्रः ॥ १ ॥

योऽजीजनच्चारुमतिः स्वगङ्गा—देव्यां जगज्जीवनमार्यशीलम् ।<br>
ज्येष्ठं गुणैस्तैर्वयसापि मन्ये पुत्रं त्रयाणामनुजन्मभाजाम् ॥ २ ॥<br>
सरस्वतीमात्मगुणानुरूपामसौ स्वभार्यां परिगृह्य तस्याम् ।<br>
लेभे बहूनां चतुरः सुतानां चिरायुषौ द्वौ तनयौ सुते द्वे ॥ ३ ॥

पुत्रौ तावुपनीयवेदविधिना श्रीमज्जगज्जीवनो,<br>
विद्याभ्यासकृतेऽमले गुरुकुले सम्प्राहिणोद् वर्णिनौ ।

यत्रैकः स्वगुणानुरूपमभजत् ख्यातिं स मेधाव्रतः,
सत्येनात्मगुणेन चापरसुतः सत्यव्रतो विश्रुतः ॥ ४ ॥
हृद्यैः सुगद्यैरनवद्यपद्यैः, सद्यः समाह्लादितपारिषद्यः ।
विद्यावतां द्योतितचित्तसद्मा, विद्योतते योऽद्य कविप्रकाण्डः ॥५॥
तस्यैव मेधाव्रतपण्डितस्य, प्रशस्यवाग्गुम्फितपद्यकान्ते ।
विहृत्य शान्ते कवितावनान्ते प्रीणातु चेतः सुमनःसमूहः ॥ ६ ॥

गुरुकुलमधिवसतैवामुना वर्णिना महीमण्डलमण्डनायमानां विधातु-रनुपमसृष्टिसौन्दर्यरचनाकौशलशिल्पभवनभूतां काश्मीरभुवमवलोकयितुं गतवता निसर्गसुन्दरीप्रकृतिदेवी निर्वर्ण्य वर्णिता वर्णनीयया वाचा । सैव वर्णना प्रकृतिसौन्दर्यरूपकरूपेण विराजते । नैसर्गिकवर्णनं निर्विवर्णयिषूणां भावुकजनानां तत् "प्रकृतिसौन्दर्यम्" नाम नाटकमतिमात्रं मनः सन्तोष-मापादयिष्यतीति मन्ये ।" ( ३-६-२० )

बाल्यकालादधुनापर्यन्तं श्रीमद्भिः कविरत्नाचार्यैः संस्कृते २४ चतुर्विंशा गुरुलघुकाव्यग्रन्था हिन्दीभाषायाञ्च त्रयो ग्रन्था मिलित्वा २७ सप्तविंशा ग्रन्था विरचिता विराजन्ते । तदन्तर्गतान्येवोदाहरणानि गद्यपद्यरूपाणि विन्यस्तानि काव्यालङ्कारसूत्रवृत्तौ तैः पूज्यचरणैर्मुनिभिः ।

## क्रमशो रचितानां तेषां नामानि लिख्यन्ते

१ देशाभ्युदयकाव्यम् । गुरुकुलवृत्तान्ते प्रकाशितं समाप्तम् ।
२ ब्रह्मचर्यशतकम् । प्रकाशितं द्वितीयसंस्करणं झज्जरगुरुकुलेन ।
३ प्रकृतिसौन्दर्यम् । [ नाटकम् ] प्रकाशितमस्ति च लभ्यम् ।
४ पद्यतरङ्गिणी । [ काव्यम् ] अप्रकाशितमेव पुस्तकरूपेण ।
५ कुमुदिनीचन्द्रः । [ उपन्यासः ] द्वितीयं संस्करणं लभ्यते ।
६ रुक्मिणीहरणम् । [ हिन्दी नाटकम् ] पुरा 'ज्योतिर्मासिके' प्रकाशितं क्रमशः [ सम्प्रतिग्रन्थरूपेण न प्रकाशितम् ] ।
७ दयानन्दलहरी । [ त्रिवारं संस्करणं प्रकाशितं [ सटीकम् ] ।

८ सत्यार्थप्रकाशः। [ संस्कृतानुवादः ४-१०-११ समुल्लासानां मथुराशताब्द्या प्रकाशितः ]।
९ दिव्यसंगीतामृतम्। [ हिन्दीसंगीतपुस्तकम् ] बड़ौदा आर्यकन्या-महाविद्यालयेन प्रकाशितम्।
१० गिरिराजगौरव। [ हिन्दीकाव्यम् ] प्रकाशितम्। [ स्वयम् ]
११ दयानन्ददिग्विजयम्। [ महाकाव्यम् ] भाग १ प्रकाशितम्। [ स्वयम् ]
१२ दयानन्ददिग्विजयम्। [ महाकाव्यम् ] द्वितीयभागात्मकं प्रकाशितम्। [ स्वयम् ]
१३ ईशोपनिषत्काव्यम्। प्रकाशितम्। [ स्वयम् ]
१४ ब्रह्मचर्यमहत्त्वम्। प्रकाशितम् [ हरयाणासाहित्यसंस्थानेन ]। ( पो० गुरुकुल झज्जर [ जि० रोहतक )
१५ नारायणस्वामिचरितम्। " " "
१६ विरजानन्दचरितम्। " " "
१७ गुरुकुलशतकम्। प्रकाशितम् [ हरयाणासाहित्यसंस्थानेन ]
१८ दिव्यानन्दलहरी। प्रकाशिता [ चित्तौडगुरुकुलसमित्या ]
१९ ज्ञानेन्द्रचरितम्। अप्रकाशितम्।
२० व्रतीन्द्रनित्यानन्दशतकम्। प्रकाशितम् [ परोपकारिनित्यानन्द-जन्मशताब्दीपत्राङ्के ]।
२१ शुद्धिगङ्गावतारः। [ उपन्यासः ] अर्द्धलिखितः।
२२ छन्दःसूत्रवृत्तिः। प्रकाशनाय-सन्नद्धा।
२३ काव्यालङ्कार-सूत्रवृत्तिः। प्रकाशिता। [ हरयाणासाहित्य-संस्थानेन ]
२४ चारुचरितामृतम्। प्रकाशनाय सम्भृतम्।
२५ वैदिकराष्ट्रकाव्यम्। लुप्तम्।
२६ साहित्यसुधा। पाठ्यपुस्तकं प्रकाशितम्। [ सातवलेकरमहाभागेन ]

२७ साहित्यसुधा । द्वितीयभागः । सम्प्रति समाप्तम् ।
प्रकाशनाय संभृतम् ।

एतेषां समग्राः प्रकाशिता ग्रन्था झज्जरगुरुकुलत एव लभ्यन्ते ।

पवित्रसंस्कृतसाहित्यप्रणयिभिर्गुरुकुलाचार्यैरार्यविद्यालयाधिकारिभिश्च निजपाठ्यग्रन्थरूपेण द्रुतं समादृता स्यादियं काव्यालङ्कारसूत्रवृत्तिर्यदि, तर्हि वृत्तिकाराणां परिश्रमः साफल्यमाप्नुयादिति सम्प्रार्थ्य महाभागान् विरमति—

मार्ग० शु० पूर्णिमा<br>सं० २०१८ वि०<br>ई० सन् १९६१

विदुषां वशंवदो—<br>ब्र० धर्मव्रतो वेदवाचस्पतिः<br>झज्जरगुरुकुलोपाध्यायः

---

* ओ३म् ब्रह्मणे नमः *

# काव्यालङ्कारसूत्रम्

---

वेदचक्षुर्ददौ येन ब्रह्मणा गुरुणाऽऽदिना ।
प्रणमामि परात्मानं मेधाकामो मुनिव्रतः ॥ १ ॥
जगज्जीवनमार्येन्द्रं मातरं च सरस्वतीम् ।
स्मरामि पितरौ भक्त्या ज्ञानदान्सद्गुरूनपि ॥ २ ॥
काव्यालङ्कारसूत्राख्यं शास्त्रं येन विनिर्मितम् ।
यास्काचार्यमुनिं वन्दे काव्यनिर्माणशासकम् ॥ ३ ॥
काव्यालङ्कारसूत्रस्य यास्काचार्यकृतस्य ताम् ।
वृत्तिं तन्वे सुबोधाय व्रतिनां व्रतिमङ्गलाम् ॥ ४ ॥

## अथ काव्यालङ्काराः ॥ १ ॥

अथेतीमं शब्दमधिकाराय प्रयुङ्क्ते यास्कमुनिवरः । कवेः कृतिः काव्यं कथ्यते । अलङ्क्रियते विमण्ड्यते पदसमूहोऽर्थनिचयो वा यैस्तेऽलङ्कारा उदीर्यन्ते । काव्यमभिलक्ष्य गुम्फिता अलङ्कारा उपक्रम्यन्ते ॥ १ ॥

इदानीममीषां द्विविधतां वर्णयति सूत्रकारः—

## लौकिकवैदिकास्ते ॥ २ ॥

ते काव्यमुद्दिश्य ग्रथिता अलङ्कारा द्विप्रकारा अवगन्तव्या वैदिकलौकिक-भेदात् । काव्यस्य द्विविधतायां तदलङ्काराणामपि द्वैविध्यं निसर्गसिद्धं सम्पद्यते । काव्यमपि द्विविधं वैदिकं लौकिकं च । तयोर्यदा "कविर्मनीषी परिभूः स्वयम्भू"रिति मन्त्रे प्रतिपादितः परमेश्वरपर्यायः कविशब्द उपादीयते तदा तदीयज्ञानस्वरूपमीश्वरीयं वैदिकं काव्यं स्वीक्रियते । अन्यत्रान्यवेदेऽपि

"पश्य देवस्य काव्यं न ममार न जीर्यति" इति श्रवणात् । तच्च वेदात्मकमेव । तदपि चतुर्विधम्, ऋग्यजुःसामाथर्वनामकं विज्ञेयम् । तेषु यत्रार्थवशेन पादव्यवस्था सा ऋक् । यत्र गीतिस्तत्साम । यत्र दण्डकस्वरूपाः प्रायो मन्त्रा निगद्यन्ते तद् यजुः । यत्र च छन्दोलक्षणसम्पन्ना मन्त्रा विद्यन्ते सोऽथर्वाभिधो ब्रह्मवेदः । तेषु वेदकाव्येषु निर्वर्ण्यमाना उपमादयोऽर्थालङ्कारा यमकादयश्च शब्दालङ्कारा वैदिका व्याह्रियन्ते ।

यदा तु विद्वन्मनुजापरवाचकः कविशब्द उररीक्रियते तदा तु लोकमभिप्रेत्य प्रयुक्तं सकलमपि सूत्रात्मकं पद्यात्मकं वा काव्यवृन्दं लौकिककाव्यपदेन व्यपदिश्यते । तत्र गोतमादिमुनिवररचितेषु सूत्रेषु मगणादिगुरुलघुसमावेशात् काव्यव्यपदेशः । रामायणादौ तु पिङ्गलाचार्यप्रणीतच्छन्दःसूत्रानुसारितया विशदमेव काव्यत्वम् । तदुभयमुद्दिश्य प्रवृत्ता इमेऽलङ्कारास्सन्ति । अत एवैषां वैदिकत्वं-लौकिकत्वञ्च स्फुटमेवास्ति । लोकापेक्षया वेदस्याभ्यर्हितत्वात्सूत्रे पूर्वं तन्निर्देशः कर्त्तुमुचितः, परं "लोके व्युत्पन्नस्य वेदार्थप्रतीते"-रिति नियमाद् वेदस्यापि लोकरक्षायै प्रवृत्तत्वात्तदेकप्रयोजनवत्त्वाच्च पूर्वं लोकनिर्देश एव यास्काचार्यसम्मतः ॥ २ ॥

उभयेऽपि तेऽलङ्कारास्त्रिविधाः—

## शब्दार्थोभयविधत्वात् ॥ ३ ॥

शब्दसौष्ठवमभिप्रेत्य गुम्फिता यमकादयः शब्दालङ्कारा अर्थसौन्दर्यमभिलक्ष्य निबद्धा रूपकादयोऽर्थालङ्काराः । शब्दसृष्टमर्थसृष्टञ्चेत्युभयमपि रामणीयकमुद्दिश्य ग्रथिताः श्लेषादयस्तूभयालङ्काराः ॥ ३ ॥

साम्प्रतं लौकिककाव्यस्वरूपमाह—

## गुणालङ्कारसङ्गतावदुष्टौ रसवच्छब्दार्थौ काव्यम् ॥४॥

गुणैश्चालङ्कारैश्च सङ्गतौ मिलितौ, अदुष्टौ दोषरहितौ रसवन्तौ शब्दार्थौ काव्यम्=काव्यपदवाच्यौ विज्ञेयौ गुणालङ्कारनिरूपणं दोषसङ्कलनं चाग्रे नयनविषयीभविष्यति । रसवदिति विशेषणपदेन नीरसशब्दार्थयोः काव्यत्वं निरस्तमिति सूत्रकृन्मुनेरभिप्रायः ।

२

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥
निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।"

श्रव्ये काव्ये तु शान्तोऽपि नवमो रसः [ काव्यप्रकाशे ] । इमे नवरसाः काव्ये कविभिर्यथाप्रसङ्गं निवेश्यन्ते ॥ ४ ॥

तत्तथाविधं काव्यं कस्मादादेयमिति व्याचष्टे—

## तद्ग्राह्यमलङ्कारात् ॥ ५ ॥

अलङ्कारादिति जातावेकवचनम् । तत्पूर्वकथितलक्षणलक्षितं काव्यमलङ्कारेभ्यो ग्राह्यं सम्यङ् निर्मेयम् । अलङ्कारानुरूपशब्दसमूहादेव तादृशं काव्यं कविना विरचनीयमित्याशयः ॥ ५ ॥

ननु कोऽयमलङ्कारो यस्मात्तत्काव्यमादेयमित्याह—

## सौन्दर्यमलङ्कारः ॥ ६ ॥

सौन्दर्यं लावण्यं रामणीयकमित्यनर्थान्तरम् । शब्दगतमर्थगतमुभयगतं वा सौन्दर्यं यत्तदेवोपजीव्योपजीवकभावेन रसैकप्रवणं गुणैकशरणमलङ्कारपदवाच्यं तदग्रे निरूपयिष्यते ॥ ६ ॥

अधुना काव्ये कथं तत्प्रयोगः करणीय इति कथयति—

## स, दोषगुणालङ्कारहानादानाभ्याम् ॥ ७ ॥

स खल्वलङ्कारः काव्ये निरूपयिष्यमाणदोषाणां हानात्त्यागाद् गुणानामलङ्काराणाञ्चादानाद् ग्रहणात्सत्कविभिः प्रयुज्यताम् ॥ ७ ॥

सम्प्रति दोषाः कथं त्यक्तव्याः कथं वा गुणालङ्काराः प्रयोक्तव्या इत्यपेक्षायां व्याहरति—

## शास्त्रतस्ते ॥ ८ ॥

ते दोषा गुणा अलङ्काराश्च शास्त्रतोऽस्मादलङ्कारशास्त्राद् विज्ञेयाः । इदमलङ्कारशास्त्रं विमृश्य = विज्ञाय दोषाञ्जह्याद् गुणानलङ्काराँश्चाददीत ॥८॥

किं पुनः फलमलङ्कारवता काव्येन ? येनैतदर्थोऽयं प्रयत्न इति निगदति—

**काव्यं सद् दृष्टादृष्टार्थं प्रीतिकीर्तिहेतुत्वात् ॥ ९ ॥**

काव्यं सद्–उत्तमं ललितं दृष्टप्रयोजनम्, प्रीतिहेतुत्वात् । सत्काव्येन स्तुतः सन्नरेन्द्रः प्रीतो भवति साधयति चार्थं सत्कवेः सद्य एव तज्जीवन-दशायाम् । तद् अदृष्टप्रयोजनं कीर्तिहेतुत्वात् । कविना स्वजीवनदशायां कीर्ति-र्नानुभवितुं शक्या यतः सा पश्चाद्भाविनीति खल्वदृष्टार्था समुदीर्यते । अत्र श्लोकाः—

प्रतिष्ठां काव्यबन्धस्य यशसः सरणिं विदुः ।
अकीर्तिवर्तनीं त्वेवं कुकवित्वविडम्बनाम् ॥
कीर्तिं स्वर्गफलामाहुरासंसारं विपश्चितः ।
अकीर्तिं तु निरालोकनरकोद्देशदूतिकाम् ॥
तस्मात्कीर्तिमुपादातुमकीर्तिं तु निबर्हितुम् ।
काव्यालङ्कारशास्त्रार्थः प्रसाद्यः कविपुङ्गवैः ॥

तस्मात्सत्काव्यं निर्मातव्यं येनेह चामुत्र च प्रीतिकीर्तिजन्यं लौकिकमलौकिकञ्च सुखं लभेत सत्कविः ॥ ९ ॥

इति श्रीमन्मुनिमेधाव्रताचार्यकविरत्नविरचितायां व्रतिमङ्गलाभिधायां
यास्कीय–काव्यालङ्कारसूत्रवृत्तौ प्रयोजनविवेचनं
नाम प्रथमोऽध्यायः ॥ १ ॥

---

# अथ द्वितीयोऽध्यायः ॥

अथ रीतिं निरूपयन्नाह—

## अरोचकिनः सतृणाभ्यवहारिणश्च कवयः ॥ १ ॥

सम्भवन्ति कवयो द्विविधा अरोचकिनो विवेकिनः। सतृणाभ्यवहारिणश्चाविवेकिनश्च=पशुसमानधर्माणो नरपशव इति भावः ॥ १ ॥

एतर्हि तयोर्मध्ये के शासनीया इति ब्रवीति—

## पूर्वे शिष्याः, विवेकित्वात् ॥ २ ॥

पूर्वे=अरोचकिनो विवेकशीलाः शिष्याः शासनीयाः। विवेकशीलत्वात्। सारासारविचारवत्वात् तेषामित्याशयः ॥ २ ॥

तदन्ये कुतो नेत्याह—

## नेतरे, तद्विपर्ययात् ॥ ३ ॥

इतरे सतृणाभ्यवहारिणो न शासनीयाः। तद् विपर्ययादविवेचनशीलत्वात्। न च शीलमपाकर्तुं शक्यते तर्कबुद्धिराहित्यात् तेषाम् ॥ ३ ॥

नन्वेवं न स्यात्सर्वोपकारकं शास्त्रम्? कुतस्तदुपादीयते तन्निगदति—

## न शास्त्रमद्रव्येष्वर्थवत् ॥ ४ ॥

न खलु शास्त्रमद्रव्येषु पात्ररहितेष्वयोग्येष्वर्थवत्सफलं सम्पद्यते ॥ ४ ॥

निदर्शनेन समर्थयति—

## न कतकं पङ्कप्रसादनाय ॥ ५ ॥

न हि कतकं निर्मलीकरणद्रव्यं पयस इव पङ्कस्य=कर्दमस्य प्रसादनाय विमलीकरणाय प्रभवति। अतो विवेकवन्त एवोपदेष्टुं पार्यन्ते नेतरे ॥ ५ ॥

एवमधिकारिणो निरूप्य रीति[illegible]—

**रीतिरात्मा काव्यस्य ॥ ६ ॥**

रीतिरियं काव्यस्यात्मत्वेन निरूप्यते देहस्य जीव इव ॥ ६ ॥

का पुनरियं रीतिरिति व्याहरति—

**विशिष्टा पदरचना रीतिः ॥ ७ ॥**

रसालङ्कारविशिष्टा या पदानां रचना सैव रीतिरिति निर्दिश्यते काव्यस्य तद्रूपत्वात् । विशिष्टेतिपदस्य सापेक्षत्वाद् रसालङ्कारसंयोग इष्यते । यत्तु विश्वनाथेन केवलरसेष्वात्मत्वमारोपितं तद् व्याख्याभासेन सुधीभिर्निषिद्धं यतः पदेभ्यः पृथग् रसालङ्काराणामवस्थितिरसम्भवा ॥ ७ ॥

कोऽसौ विशेष इत्यत आह—

**विशेषो गुणात्मा ॥ ८ ॥**

वक्ष्यमाणा गुणा एवात्मा=स्वरूपं यस्य स विशेषस्तद्विशिष्टा या पदानां रचना सैव रीतिरुक्ता ॥ ८ ॥

रीतिभेदानुपन्यस्यति—

**सा त्रिधा—वैदर्भी गौडीया पाञ्चाली चेति ॥ ९ ॥**

सा चेयं रीतिस्त्रिधा भिद्यते—वैदर्भी, गौडीया, पाञ्चाली चेति । तासामाद्या विदर्भदेशप्रधाना, द्वितीया गौडदेशप्रमुखा, तृतीया पञ्चालदेशमुख्या । निदर्शनमात्रमिदं तेनान्यदेशोद्भूता अपि रीतयो भवितुमर्हाः ॥ ९ ॥

इदानीं देशविशेषैरपि किं वा काव्यस्य केनाप्यंशेन रामणीयकं प्रतीयते यतस्तेषामभिधानं गृह्यते तन्निरूपयति—

**विदर्भादिषु दृष्टत्वात्तत्समाख्या ॥ १० ॥**

विदर्भादिदेशनिवासिभिः कविभिस्तेषु यथावस्थितगुणोपलम्भादिमाः संज्ञाः काव्येषु प्रयुज्यन्ते न पुनर्देशैः किञ्चिद् उपक्रियते काव्यानाम् ॥ १० ॥

तासां गुणभेदाद् भेदं लक्षयति—

**समग्रगुणा वैदर्भी ॥ ११ ॥**

अग्रे वर्णयिष्यमाणैः समग्रैरोजःप्रसादप्रभृतिभिर्गुणैरलङ्कृता वैदर्भी नाम रीतिरुच्यते। एतावता विदर्भदेशस्थैः कविभिरखिलगुणविभूषितं काव्यं प्रणीयत इत्यवगम्यते। अत्र श्लोकः—

'अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता।
विपञ्ची[1]स्वरसौभाग्या वैदर्भीरीतिरिष्यते ॥'

तामेतामेवं कवयः स्तुवन्ति—

'सति वक्तरि सत्यर्थे सति शब्दानुशासने।
अस्ति तन्न[2] विना येन परिस्रवति वाङ् मधु ॥'

अत्रोदाहरणम्—

मोदन्तां त्वयि शासति प्रकृतयः क्षोणीमिमां क्ष्मापतौ
सन्तुष्यन्तु बुधाः प्रशान्तमनसः सौजन्यवृत्तेन ते।
एधन्तां श्रुतिधर्मवर्त्मत इमा राज्यश्रियस्तेऽनिशं
गीयन्तां तव कीर्त्तयश्च कविभिश्चन्द्रोज्ज्वला निर्मलाः ॥

( प्रकृतिसौन्दर्ये ६ । ३२ )

अस्मिन् पद्ये समग्रगुणाः प्रभान्ति वैदर्भीरीतिवर्णिताः ॥ ११ ॥

इदानीं गौडीयां वर्णयति—

**ओजः कान्तिमती गौडीया ॥ १२ ॥**

ओजः कान्तिश्च भवतो यस्यां सा ओजः कान्तिमती गौडीयाऽभिधीयते रीतिः। माधुर्यसौकुमार्ययोरभावात् समासबहुला परुषाक्षरा च सा भाति। अत्र श्लोकः—

'समस्तात्युत्कटपदामोजःकान्तिगुणान्विताम्।
गौडीयामिति गायन्ति रीतिं रीतिविचक्षणाः ॥'

---

१—वीणा। २—रीत्यात्मकं वस्तु।

अत्रोदाहरणम्—

पृथ्वीसिंहनरेन्द्र दुर्मदवुधोद्दामद्विपालीवचः—
शुण्डादण्डचिखण्डने कलहिनां पाखण्डिनां मण्डले।
दम्भेहामृगमर्दनेऽनृतजुषां गोमायुकल्पात्मनां
विद्रावे जयति प्रचण्डयतिराट् शार्दूलविक्रीडितम्॥
( दयानन्ददिग्विजये महाकाव्ये १२।४४ )

पद्येऽस्मिन्नोजःकान्ती स्फुटं प्रतीयेते ॥ १२ ॥

साम्प्रतं पाञ्चालीं लक्षयति—

**माधुर्यसौकुमार्योपपन्ना पाञ्चाली ॥ १३ ॥**

माधुर्येण सौकुमार्येण च गुणेनोपपन्ना पाञ्चाली नाम रीतिरुदीर्यते। ओजःकान्त्यभावान्मृदुपदा मधुरा च प्रतिभाति।

तथा च श्लोकः—

'आश्लिष्टश्लथभावां तां पुराणच्छाययान्विताम्।
मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः॥'

अत्रोदाहरणम्—

दिने सूर्यश्चन्द्रो निशि भगवतो यस्य नयने
शिरो द्यौर्यस्यासौ वदनमनलोऽङ्घ्री च पृथिवी।
जगत्प्राणः प्राणा गगनमुदरं त्वङ् निगमगी-
र्दिशो यस्य श्रोत्रे वपुरपि जगत्तं यज मनः॥
( दिव्यानन्दलहरी श्लोकः ५ )

अत्र च पदानां पृथग्विन्यासाद् गाने मार्दवं माधुर्यं चानुभूयते।

अत एव—

"रेखासु चित्रमिव रीतिषु काव्यमासु।
सम्बद्धमित्यनुमतं बहुयास्कपादैः॥" १३॥

अधुनान्यदेशजैः कविभिरासु रीतिषु काऽनुसरणीयेत्याह—

## तासां पूर्वा ग्राह्या गुणसाकल्यात् ॥ १४ ॥

तासां तिसृणां रीतीनां पूर्वा वैदर्भी ग्राह्या गुणानां साकल्यात् समग्र-गुणवत्त्वादादेया ॥ १४ ॥

## न पुनरितरे, स्तोकगुणत्वात् ॥ १५ ॥

इतरे गौडीयपाञ्चाल्यौ न गृह्येताम् । स्तोकमल्पम् । अल्पगुणवत्त्वात् । दशगुणवत्काव्यापेक्षया गुणद्वयवत्काव्यस्याल्पगुणवत्त्वमेव ॥ १५ ॥

यद्येवं तर्हि किमर्थं तयोः प्रणयनमिति कथयति—

## तदारोहणार्थमितराभ्यास इत्येके ॥ १६ ॥

तस्या वैदर्भ्या एवारोहणार्थं रचनासिद्ध्यर्थमितरयोरपि रीत्योरभ्यासः पुनः पुना रचनं विधीयतामिति केचन भरतप्रभृतयो मन्यन्ते न सर्वे ॥१६॥

इदानीं तान् प्रत्याचष्टे—

## तत्तु न, अतत्त्वशीलस्य तत्त्वाऽनिष्पत्तेः ॥ १७ ॥

तत्तेषां मतं नादरणीयम् । कुत इति चेदत्राह—न ह्यतत्त्वं शीलयतस्तत्त्वं निष्पद्यते ॥ १७ ॥

निदर्शनार्थं निगदति—

## न शणसूत्रवानाभ्यासे त्रसरसूत्रवाने वैचित्र्यलाभः ॥ १८ ॥

यथा पटवायकः कुविन्दः शणतन्तूनां वानमोतप्रोतभावेनावस्थानमभ्यस्यन् त्रसरस्य कौशेयस्य वाने न कौशलमभ्येति तथैव वैदर्भीभिन्नरीतिद्वयाभ्यासेन कविर्नाप्नुयाद् वैदर्भीनिर्माणनैपुणीम् ॥ १८ ॥

## सापि समासाभावे शुद्धवैदर्भी ॥ १९ ॥

सापि वैदर्भी रीतिः शुद्धवैदर्भी तदा समुदीर्यते यदा समासरहितपदा भवति । वैदर्भी द्विधा शुद्धा मिश्रा च । तत्र समासहीना शुद्धा, अल्पसमासा च मिश्रा वैदर्भी वेदितव्या । समग्रगुणवत्वात्तस्यामोजोगुणस्यापि समावेशादल्पसमासा सा मिश्रा वैदर्भी व्याह्रियते ॥ १९ ॥

## तस्यामर्थगुणसम्पदास्वाद्या ॥ २० ॥

तस्यां शुद्धवैदर्भ्यां विशेषार्थवती गुणसम्पदास्वाद्या रसनीया भवति। एतस्यामेवार्थवैचित्री गुणलक्ष्मीश्च चकास्ति नान्ययो रीत्योरिति विज्ञायते ॥ २० ॥

## तदुपारोहादर्थगुणलेशोऽपि ॥ २१ ॥

तस्या उपारोहाच्छुद्धवैदर्भीरीतेराश्रयात्काव्येऽर्थगुणानां लेशोऽपि [ किमुत समुदायः ] स्वदते=आस्वादनीयो भवति। किञ्चिद्गुणापि वैदर्भी रोचते किम्पुनः समग्रगुणेति तात्पर्यम् ॥ २१ ॥

## सापि वैदर्भी तात्स्थ्यात् ॥ २२ ॥

सा प्रख्याता अर्थगुणसम्पदपि तात्स्थ्याद् विशुद्धवैदर्भीनिष्ठत्वादुपचारतो वैदर्भीत्युच्यते कविभिः। तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति नियमाद् वैदर्भीगता अर्थगुणा अपि तन्नाम्नैव व्यपदिश्यन्ते। अर्थगुणग्रहणं शब्दगुणनिरासार्थम् ॥ २२ ॥

अर्थगुणा अपि वैदर्भीमेवावलम्ब्य स्वदन्ते। तथा चाहुः—

'किन्त्वस्ति काचिदपरैव पदानुपूर्वी
यस्यां न किञ्चिदपि किञ्चिदिवावभाति।'
'[ आनन्दयत्यथ—च कर्णपथं प्रयाता
चेतः सताममृतवृष्टिरिव प्रविष्टा ॥ ]'
'वचसि यमधिशय्य स्यन्दते वाचकश्री—
वितथमवितथत्वं यत्र वस्तु प्रयाति।
उदयति हि स तादृक् क्वापि वैदर्भरीतौ
सहृदयहृदयानां रञ्जकः कोऽपि पाकः' ॥

इति श्रीमन्मुनिमेधाव्रताचार्यकविरत्नविरचितायां व्रतिमङ्गलाभिधायां यास्कीय-काव्यालङ्कारसूत्रवृत्तौ रीतिनिश्चयो नाम द्वितीयोऽध्यायः ॥ २ ॥

# अथ तृतीयोऽध्यायः ॥

गताध्याये काव्यात्मभूता रीतयो निरूपिताः । अधुना काव्याङ्गवर्णनाय तृतीयमध्यायमुपक्रमते यस्येदं प्रथमं सूत्रम्—

## लोको विद्या प्रकीर्णं च काव्याङ्गानि ॥ १ ॥

काव्यस्याङ्गानि त्रीणि लोको विद्या प्रकीर्णं च सन्ति ॥ १ ॥

तानि क्रमशो व्याचष्टे—

## लोकवृत्तं लोकः ॥ २ ॥

लोको जडचेतनस्वरूपः सत्त्वसमूहस्तस्य वृत्तम्=चरित्रं लोक इति निगद्यते । 'लोकस्तु भुवने जने' । 'वृत्तं पद्यं चरित्रं शीलं' चेति कोषः । अनेन समस्तस्थावरजङ्गमात्मकवस्तुसङ्घचरित्रपरिचयः प्रथमं काव्याङ्गं निष्पद्यते । न तदीयसंस्तवमन्तरेण वास्तविकं नैसर्गिकपदार्थसौन्दर्यं कविनाऽवगन्तुं पार्येत । अतस्तत्परिचयाय काव्यप्रणेत्रा देशाटनं विधीयेत ॥ २ ॥

इत्थं लोकं वर्णयित्वा द्वितीयां विद्यां निरूपयति—

## शब्दस्मृत्यभिधानकोषछन्दोविचितिकलाकामशास्त्रदण्डनीतिपूर्वा विद्या ॥ ३ ॥

शब्दस्मृत्यादीनां काव्यनिर्माणेष्वपेक्षणीयत्वात् तत्पूर्वा विद्याऽधिगन्तव्येति सूत्रहृदयम् ॥ ३ ॥

तामिदानीं क्रमेण प्रतिपादयति—

## शब्दस्मृतेः शब्दशुद्धिः ॥ ४ ॥

शब्दाः स्मर्यन्तेऽनेनेति शब्दस्मृतिर्व्याकरणं पाणिनिप्रणीतं तस्माच्छब्दानां शुद्धिं साधुत्वं निश्चिनुयात् । शुद्धानि हि पदानि निःशङ्कैः कविभिः प्रयुज्यन्ते । अतोऽवश्यं कविर्व्याकरणमधीयीत ॥ ४ ॥

कोषपरिज्ञानं समर्थयति—

**अभिधानकोषतः पदार्थनिश्चयः ॥ ५ ॥**

अभिधानकोषो नाम शब्दनिधिः । स च वैदिको लौकिकश्च । यास्कप्रणीतो निघण्टुनामको वैदिककोषोऽयं प्रथमः । द्वितीयश्च कात्यायननिर्मितः शब्दार्थसंग्रहः पद्यात्मकः । आभ्यां कोषाभ्यामुभयविधपदार्थनिश्चयो विधेयः । ततः कवित्वं प्रपित्सुः कविर्नियमेन कोषज्ञानं कुर्यात् ॥ ५ ॥

एवं कोषाध्ययनं निरूप्य च्छन्दःशास्त्रपठनमाह—

**छन्दोविचितेर्वृत्तसंशयच्छेदः ॥ ६ ॥**

छन्दो विशेषेण चीयते संगृह्यते यस्मात्तच्छन्दोविचितिनामकं पिङ्गलाचार्यरचितं छन्दःसूत्रम् । तस्मात्पद्याभ्यासकर्त्ता वृत्तसंशयं छिन्द्यात् । येन गुरुलघुवर्णोच्चारणं विरामनियमं विविधवृत्तनिर्माणचातुर्यं विजानीयादतश्छन्दोज्ञानदं शास्त्रमवश्यमेव पठेत् कविर्बुभूषुर्मनुजः ॥ ६ ॥

अथ कलाशास्त्रविज्ञानमुपदिशति—

**कलाशास्त्रेभ्यः कलातत्त्वस्य संवित् ॥ ७ ॥**

कला गीतनृत्यचित्रादिकास्तासामुपदेशकानि शास्त्राणि विशाखिलभरतप्रणीतानि कलाशास्त्राणि, तेभ्यः कलातत्त्वस्य संवित्=प्रज्ञानं प्राप्नुयात् कलेप्सुः । न हि कलारहस्यानुपलब्धौ कलावस्तु काव्ये सम्यङ् निबद्धुं शक्यते कविना ॥ ७ ॥

कामशास्त्रबोधं वक्ति—

**कामशास्त्रतः कामोपचारस्य ॥ ८ ॥**

"संवित्" इत्यनुवर्तते । कामोपचारस्य संवित् यथार्थविद्या कामशास्त्रतो विज्ञेया । कामपरिचर्याकुशलं हि वस्तु काव्यस्येति ॥ ८ ॥

अर्थशास्त्रपरिज्ञानमुपदिशति—

दण्डनीतेर्नयापनययोः ॥ ६ ॥

दण्डनीतिर्मन्वादिप्रणीतमर्थशास्त्रं तस्मान्नयापनययोः संविदुपलब्धि-विधेया। तत्र षाड्गुण्यस्य सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्यस्य यथा-वत्प्रयोगो नयः। तद् विपरीतोऽपनयः। न हि तावविज्ञाय नायकप्रतिनायक-योश्चरित्रं शक्यं काव्ये वर्णयितुमिति ॥ ६ ॥

इतिहासादिसुबोधमुपदिशति—

इतिवृत्तकुटिलत्वं च ततः ॥ १० ॥

तत इति पदं दण्डनीतेर्विज्ञापकम्। इतिवृत्तपदेन वाल्मीकिव्यासादि-विरचितं काव्यशरीररूपमैतिह्यमादीयते। अतो दण्डनीतेः सकाशादेव नायकप्रतिनायकयोः परस्परजयैषिणोर्विजयलाभाय कुटिलत्वप्रयोगा वेदि-तव्याः। एवमन्यासामपि विद्यानां यथायथमुपयोगोऽवगन्तव्य इति ॥१०॥

अधुना काव्यस्य तृतीयमङ्गं वर्णयति—

लक्ष्यज्ञत्वमभियोगो वृद्धसेवाऽवेक्षणं प्रतिभान-मवधानञ्च प्रकीर्णम् ॥ ११ ॥

विज्ञेयमिति भावः। तच्च षड्विधं यद् यास्कमुनिः स्वयं विभजते ॥ ११ ॥

तत्र काव्यपरिचयो लक्ष्यज्ञत्वम् ॥ १२ ॥

तत्र प्रकीर्णे काव्यानां वाल्मीकिव्यासप्रमुखप्रणीतानां परिचयो लक्ष्य-ज्ञत्वं भण्यते। काव्यविरचनं लक्ष्यं तज्जानातीति तज्ज्ञस्तस्य भावस्तत्त्वम्। अतो गुरुमुखात् प्रत्नकविमुनिप्रणीतानि सत्काव्यानि पठनीयानि। नाना-सत्काव्यपरिचयेन खलु काव्यबन्धस्य व्युत्पत्तिर्जायते ॥ १२ ॥

इत्थं लक्ष्यज्ञतां समुपदिश्याभियोगं लक्षयति—

काव्यबन्धोद्यमोऽभियोगः ॥ १३ ॥

बन्धनं बन्धः काव्यस्य बन्धो रचना काव्यबन्धः। तत्रोद्यमोऽभियोगः स हि कवित्वप्रकर्षं जनयति ॥ १३ ॥

अथ वृद्धसेवामादिशति—

**काव्योपदेशगुरुशुश्रूषणं वृद्धसेवा ॥ १४ ॥**

काव्योपदेशे गुरव उपदेष्टारस्तेषां शुश्रूषणं वृद्धसेवा । ततः काव्यकौशलमुत्पद्यते ॥ १४ ॥

अतः परमवेक्षणं वर्णयति—

**पदाधानोद्धरणमवेक्षणम् ॥ १५ ॥**

पदस्याधानं न्यासः स्थापनं वा । उद्धरणमपसारणम् । तयोः खल्ववेक्षणं पद्यनिर्माणकाले । अवेक्षणेन काव्ये शुद्धता सुन्दरता च जायते ।

अत्र श्लोकौ—

'आधानोद्धरणे तावद्यावद् दोलायते मनः ।
पदस्य स्थापिते स्थैर्ये हन्त ! सिद्धा सरस्वती ॥
यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम् ।
तं शब्दन्यासनिष्णाताः शब्दपाकं प्रचक्षते ॥' १५ ॥

**कवित्वबीजं प्रतिभानम् ॥ १६ ॥**

कवित्वस्य यद् बीजं जन्मान्तरागतसंस्कारविशेषरूपं तदेव प्रतिभानमित्युदीर्यते । यस्माद् विना काव्यं न स्फुरति न निष्पद्यते, निष्पन्नं वा हास्यास्पदं भवेत् ॥ १६ ॥

इदानीमवधानं वर्णयति—

**चित्तैकाग्र्यमवधानम् ॥ १७ ॥**

चित्तस्यैकाग्र्यं बाह्यार्थनिवर्त्तनं तदवधानमुच्यते । अवहितं हि चित्तमर्थान्निरीक्षते कवितां च रचयति ॥ १७ ॥

तदवधानं कथं भवेत् तद् वदति—

**तद् देशकालाभ्याम् ॥ १८ ॥**

तद् अवधानं देशात्कालाच्च समुत्पद्यते ॥ १८ ॥

कौ पुनर्देशकालौ ? तौ कथयति—

## विविक्तो देशः ॥ १९ ॥

## रात्रियामस्तुरीयः कालः ॥ २० ॥

विविक्तो निर्जनः पवित्रो वा देशः । रात्रेस्तुरीयश्चतुर्थो यामश्च कालः । निर्जने देशे रात्रेश्चतुर्थे प्रहरे विषयोपरतेन निर्मलेन प्रसन्नेन चेतसा काव्यं करणीयं कविना ॥ १९ ॥ २० ॥

एवं काव्याङ्गान्युपदर्श्य काव्यविशेषज्ञानार्थमाह—

## काव्यं गद्यं पद्यं च ॥ २१ ॥

द्विविधं काव्यं, गदितुं योग्यं गद्यम् । पादेन संयोगात् पद्यम् । गद्यस्य पूर्वं निर्देशो दुर्लक्ष्यविषयत्वेन दुर्बन्धत्वात् । तथाहुः—'गद्यं कवीनां निकषं वदन्ति' इति ॥ २१ ॥

तच्च त्रिधा भिन्नमिति दर्शयितुमाह—

## गद्यं वृत्तगन्धि चूर्णमुत्कलिकाप्रायं च ॥ २२ ॥

तल्लक्षणानि निगदति मुनिः—

## पद्यभागवद् वृत्तगन्धि ॥ २३ ॥

पद्यस्य भागाः पद्यभागास्तद्वद्वृत्तगन्धि । वृत्तस्य गन्धो लेशो यत्र तद्वृत्तगन्धि । यथा—मत्प्रणीते विद्वद्वराभिनन्दिते सहृदयहृदयाह्लादिनि कुमुदिनीचन्द्रनामकोपन्यासे ( कला ११ पृष्ठः १५४ ) वृत्तगन्धीनि पदानि भूयांसि विलोक्यन्ते यथा–"नम्रकृपाणपाणयः" वंशस्थवृत्तांशः प्रतिभातीह गद्ये । प्रहरिवीरवराश्च" अत्र द्रुतविलम्बितछन्दोंऽशः । "क्रोधातिशयेन चन्द्रस्य नेत्रे" "शोणितशोणशोभाम्" ( कला १३ पृ० १८३ ) इत्यत्र वसन्ततिलकेन्द्रवज्रोपेन्द्रवज्राणां पादांशो भाति । "जानाम्यहं द्वारमपावरी-तुम्" अत्रापीन्द्रवज्रायाः पादो विलसति ( कला २ पृ० २६ ) "श्रेयस्तनोतु भगवानखिलेश्वरस्ते" ( कला ८ पृ० ११६ ) अत्र वसन्ततिलकापाद इत्यादि ॥ २३ ॥

इत्थमाद्यं गद्यमुपवर्ण्य द्वितीयमुपदिशति—

## अनाविद्धललितपदं चूर्णम् ॥ २४ ॥

अनाविद्धानि=अदीर्घसमासानि ललितानि सुन्दराणि कोमलानि पदानि यस्मिँस्तदनाविद्धललितपदं चूर्णमिति भण्यते गद्यम् । यथा तस्मिन्नेव मदुपन्यासे नवम्यां कलायां १२४ चतुर्विंशत्यधिकशततमे पृष्ठे—"निपतन्ति यदा हि मनुजशिरसि विपत्तिपर्वतपरम्परास्तदाऽयमतिमात्रमुद्विजते, व्याकुलीभवति मनःसन्तापमनुभवति भवति च किङ्कर्त्तव्यतामूढः । विपत्तौ धैर्यमालम्बमाना विरला हि भवन्ति पुरुषाः । निकषायमाणा हि विपदियं वर्तते निखिलनृणाम् । संकटैराहन्यमाना मुहुर्मुहुर्ह्यन्ते सन्मार्गमाश्रयन्ति मानवाः । स्मरन्ति चाखिलेश्वरं पितरं तदानीमेव । तन्मनुजमात्रेणैव सम्मुखमापतदापज्जालं धैर्येणैवापाकरणीयमनिशम् ।" [ सकलोऽयमुपन्यासः खलु चूर्णगद्यादर्शरूपः क्वचित्क्वचित्कथावस्तुवर्णनावसर एवोत्कलिकाप्रायं गद्यमत्र विलसति सुतराम् । ] ॥ २४ ॥

एवं द्वितीयं गद्यमुपन्यस्य तृतीयं वर्णयति—

## विपरीतमुत्कलिकाप्रायम् ॥ २५ ॥

यद् गद्यं पूर्वोदितगद्याद् विपरीतमतिदीर्घसमासबहुलमतिकठिनपदं तदुत्कलिकाप्रायमिति निगद्यते । यथा तस्मिन्नेवोपन्यासे द्वितीयकलायां पञ्चदशे पृष्ठे विजयनगरराजधानीसुषमावर्णनप्रसङ्गे "इतस्तु दृश्यतां कीदृशं रामणीयकमस्य रिपुकुलदुर्जयस्य विजयनगरस्येति । कियद्दूरममुत उत्तराहि तरलतररिङ्गत्तुङ्गतरङ्गभङ्गप्रसङ्गसङ्गतशिलाशकलशालिनी ललितलवङ्गैलादिलतालिङ्गितबकुलतिलकरसालचम्पकप्रमुखतरुवररुचिरोद्यानमालिनी शीतलतरतरङ्गानिलामन्दानन्ददायिनी मन्दगामिनी विमलजलवती चन्द्रवती नाम्नी तरङ्गिणी प्रवहति" ॥ २५ ॥

इत्थं गद्यभेदानुपदर्श्य पद्यभेदान् वर्णयति—

## पद्यमनेकभेदम् ॥ २६ ॥

गणवृत्तमात्रावृत्तवर्णवृत्ताभिधैः समार्धसमविषमभेदैश्च पद्यकाव्यं विविधं सम्पद्यते। पादेन संयोगात्पद्यं पादश्चतुर्थो भाग इति भगवान् पिङ्गलाचार्यः। अनेकभेदमनन्तभेदमिति ध्वन्यते। प्रस्तारजन्यनवीनवृत्तानामानन्त्यात् ॥२६॥

## तदनिबद्धं निबद्धं च ॥ २७ ॥

तदिदं गद्यपद्यरूपं काव्यमनिबद्धं निबद्धं च। यत्काव्यं मगणादिभिर्निबध्यते तन्निबद्धं ततो भिन्नं गद्यमनिबद्धम् ॥ २७ ॥

## क्रमसिद्धिस्तयोः स्रगुत्तंसवत् ॥ २८ ॥

तयोरप्यनिबद्धनिबद्धयोः काव्ययोः स्रगुत्तंसवत् क्रमसिद्धिर्बोद्धव्या। यथा स्रजि मालायां गुम्फितायामुत्तंसः शेखरः स्वयं सिध्यति। इत्थमनिबद्धे गद्यकाव्ये निष्पन्ने पद्यकाव्यं निष्पद्यते ॥ २८ ॥ किन्तु—

## नानाविद्धं चकास्त्येकतेजःपरमाणुवत् ॥ २९ ॥

न खल्वनिबद्धं काव्यं चकास्ति दीप्यते। यथैकतेजःपरमाणुरिति। अत्र श्लोकः—

'असंकलितरूपाणां काव्यानां नास्ति चारुता।
न प्रत्येकं प्रकाशन्ते तैजसाः परमाणवः ॥' इति ॥ २९ ॥

## परम्, संदर्भेषु दशरूपकं श्रेयः ॥ ३० ॥

सन्दर्भेषु प्रबन्धेषु दशरूपकम्='नाटक-प्रकरण-भाण-व्यायोग-समवकाल-डिम-ईहामृग-अङ्क-वीथी-प्रहसनात्मकं, श्रेयः समीचीनम् ॥ ३० ॥

कथं श्रेय इत्यभिदधाति—

**तद्धि चित्रं चित्रपटवद् विशेषसाकल्यात् ॥ ३१ ॥**

तन्निश्चयेन दशरूपकं चित्रं मनोहरं राजते चित्रपटवत् विशेषसाकल्याद् गुणानां बाहुल्यात् ॥ ३१ ॥ किञ्च—

**ततोऽन्यभेदक्लृप्तिः ॥ ३२ ॥**

ततो दशरूपकादेवान्यभेदानां क्लृप्तिः कल्पना समुत्पद्यते । ते च चम्पू-विरुद-त्रोटक-सट्टकादयो भेदा नाट्यशास्त्राल्लक्षणसहिता विज्ञेयाः ॥ ३२ ॥

इति श्रीमन्मुनिमेधाव्रताचार्यकविरत्नविरचितायां व्रतिमङ्गलायां
यास्कीयकाव्यालङ्कारसूत्रवृत्तौ काव्याङ्गविवेचनं
नाम तृतीयोऽध्यायः ॥ ३ ॥

---

# अथ चतुर्थोऽध्यायः ॥

काव्यसौन्दर्यलोपिनो दोषान् दर्शयितुं सूत्रयति—

## गुणविपर्ययात्मानो दोषाः ॥ १ ॥

गुणानां वर्णयिष्यमाणानां ये विपर्ययास्तदात्मानो दोषाः ॥ १ ॥

कथं तेषां परिज्ञानमित्युपदिशति—

## अर्थतस्तदवगमः ॥ २ ॥

गुणस्वरूपनिरूपणात्तेषां दोषाणामर्थापत्त्याऽवगमः प्रबोधः सुतरां सम्पद्येत ॥ २ ॥

किमर्थं ते पृथक् प्रपञ्च्यन्त इत्यत्रोपशास्ति—

## सौकर्याय प्रपञ्चः ॥ ३ ॥

सौकर्यायानायासप्रबोधाय प्रपञ्चो विस्तरो दोषाणां विधीयते, उद्दिष्टा लक्षणलक्षिता हि दोषा विज्ञायन्ते ॥ ३ ॥

पददोषान् दर्शयितुं कथयति—

## दुष्टं पदमसाधु कष्टं ग्राम्यमप्रतीतमनर्थकञ्च ॥४॥

क्रमेण तद् व्याचष्टे—

## शब्दस्मृतिविरुद्धमसाधु ॥ ५ ॥

शब्दस्मृत्या व्याकरणेन विरुद्धपदमसाधु गद्यते । 'इमां किमाचामयसे' इति श्रीहर्षः कविवर्यः । 'त्रियम्बकं संयमिनं ददर्श' ति महाकविकालिदासः । आङ्पूर्वकस्य चमुधातोरात्मनेपदित्वम्, त्र्यम्बकमिति वक्तव्ये वेदविहितमियङं विधाय त्रियम्बकमिति च कथनं लौकिकं व्याकरणविरुद्धं वेदितव्यम् । एवं बाधति लभति नाथत इत्यादिपदमसाधु ॥ ५ ॥

## श्रुतिविरसं कष्टम् ॥ ६ ॥

श्रुतिविरसं कर्णकटुपदं कष्टमित्युच्यते । 'त्वया हतश्चण्डि ! रणे नराधमः' । अत्र टवर्गं न निवेशयेदिति नियमविरुद्धं डकारनिवेशनं कर्णकटुः प्रतीयते । यद्धि रचनागुम्फितमप्युद्वेजयति ॥ ६ ॥

## लोकमात्रप्रयुक्तं ग्राम्यम् ॥ ७ ॥

लोक एव यत्प्रयुक्तं पदं न शास्त्रे तद् ग्राम्यमुच्यते । यथा—भूत्कृत-फूत्कृत-भल्ल-तल्ल-गल्लादिकं विज्ञेयम् ॥ ७ ॥

## शास्त्रमात्रप्रयुक्तमप्रतीतम् ॥ ८ ॥

शास्त्र एव प्रयुक्तं यन्न लोके तदप्रतीतमुदीर्यते ।—यथा दहरपञ्चकोष-विज्ञानस्कन्धादिकम् ॥ ८ ॥

## पूरणार्थमनर्थकम् ॥ ९ ॥

अर्थप्रयोजनं परिहाय पादपूरणाय केवलं प्रयुक्तं पदमनर्थकमुच्यते । यथा—"तु हि च स्म ह वै" इत्यादिकम् । यथा—"उदितस्तु हास्तिकवि-नीलमयं तिमिरं निपीय किरणैः सविता ।" इति वामनः । अत्र तु शब्दस्य पदपूरणार्थमेव प्रयोगोऽस्ति । यत्तु—अर्थवशादलङ्कारवशाद्वा प्रयुज्यते 'मन्ये शङ्के ध्रुवं प्रायोनून'मित्यादि, तदनेन न क्षिप्यते तस्यालङ्कारद्योतकत्वात् ॥९॥

साम्प्रतं पदार्थदोषानाह—

## अन्यार्थनेयगूढार्थाश्लीलक्लिष्टानि च ॥ १० ॥

पदार्थदूषणानि वेदितव्यानि ॥ १० ॥

एषां क्रमेण लक्षणानि कथयति—

## रूढिच्युतमन्यार्थम् ॥ ११ ॥

रूढ्यर्थमपहाय केवलयौगिकार्थपरकमन्यार्थमिति भण्यते । यथा वामन-पण्डितः—

'ते दुःखमुच्चावचमावहन्ति
ये प्रस्मरन्ति प्रियसङ्गतानाम्'

अत्रावहतिः करोत्यर्थो धारणार्थे प्रयुक्तः। प्रस्मरतिर्विस्मरणार्थः प्रकृष्ट-स्मरण इति ॥ ११ ॥

## कल्पितार्थं नेयार्थम् ॥ १२ ॥

लोकशास्त्रयोरप्रसिद्धार्थं स्वसङ्केतप्रयुक्तार्थं नेयार्थमिति निगद्यते। यथा भट्टिकाव्ये—

'सपदि पङ्क्तिविहङ्गमनामभृत्तनयसंवलितं बलशालिना।
विपुलपर्वतवर्षिशितैः शरैः प्लवगसैन्यमुलूकजिता जितम् ॥'

अत्र विहङ्गमश्चक्रवाकोऽभिप्रेतः। तन्नामानि चक्राणि तानि बिभ्रतीति विहङ्गमनामभृतो रथाः। पङ्क्तिरिति दशसंख्या लक्ष्यते। पङ्क्तिर्दशविहङ्ग-मनामभृतो रथा यस्य स पङ्क्तिविहङ्गमनामभृद् दशरथः। तस्य तनयाभ्यां रामलक्ष्मणाभ्यां संवलितं प्लवगसैन्यं जितम्। उलूकजिता इन्द्रजिता 'कौशिकशब्देनेन्द्रोलूकयोरभिधानमि'ति कौशिकशब्दवाच्यत्वेनेन्द्र उलूक उक्तः। ननु चैवं रथाङ्गनामादीनामपि प्रयोगोऽनुपपन्नः ? न, तेषां निरूढ-लक्षणत्वात् ॥ १२ ॥

## अप्रसिद्धार्थप्रयुक्तं गूढार्थम् ॥ १३ ॥

अप्रसिद्धार्थं यत्पदं यत्र कुत्रचिदर्थे प्रयुक्तं चेद् गूढार्थमिति गद्यते यथा—

'दशशतगुरयं खस्वस्तिकारूढ उग्रः' इति। दशशतानि गावोऽशवो यस्य स दशशतगुः सूर्यः। गोशब्दस्यांशुवाचित्वमप्रसिद्धमिति गूढार्थम् ॥ १३ ॥

## असभ्यार्थान्तरमसभ्यस्मृतिहेतुश्चाऽश्लीलम् ॥ १४ ॥

अनेकार्थस्य यस्य पदस्यैकार्थोऽसभ्यः स्यात्तदसभ्यार्थान्तरम्। यथा 'वर्चः' इति पदं तेजसि विष्ठायां च यत्तु पदं सभ्यार्थवाचकमप्येकदेशद्वारेणा-सभ्यार्थं स्मारयति तदसभ्यस्मृतिहेतुः। द्वयमप्येतदश्लीलं विज्ञेयम्। यथा 'कृकाटिका' इति ॥ १४ ॥

इदानीमश्लीलापवादान् ब्रवीति—

## न गुप्तलक्षितसंवृतानि ॥ १५ ॥

गुप्तं लक्षितं संवृतं च पदं नाश्लीलं सम्पद्यते ॥ १५ ॥

तान्येव लक्षयति—

## अप्रसिद्धाऽसभ्यं गुप्तम् ॥ १६ ॥

यदसभ्यं सदपि जगत्यप्रसिद्धं तद् गुप्तमुच्यते । तथा—'संबाध' इति पदमिदं सङ्कटार्थकं प्रसिद्धं न गुह्यार्थम् ॥ १६ ॥

## लाक्षणिकासभ्यान्वितं लक्षितम् ॥ १७ ॥

यत्पदं लाक्षणिकेनासभ्येनार्थेनान्वितं लोके प्रयुज्यते तल्लक्षितमिति व्याह्रियते । यथा जन्मभूमिरिति । तद्धि लक्षणया गुह्यार्थं न शब्दशक्त्या ॥ १७ ॥

## लोकसंवीतं संवृतम् ॥ १८ ॥

असभ्यमपि पदं लोकेन संवीतं यत्तत् संवृतम् । यथा—सुभगा, भगिनी, भगवती, उपस्थानम्, अभिप्रेतम्, कुमारीति ॥ १८ ॥

तदश्लीलं त्रिविधमुच्यते—

## व्रीडाजुगुप्साऽमङ्गलातङ्कदायिभेदात् ॥ १९ ॥

किञ्चित् तत्र व्रीडादायि भवति यथा वाक्काटवं हिरण्यरेता इति । किञ्चिद् जुगुप्सादायि जायते यथा कपर्दक इति । मनागमङ्गलातङ्कदायि सम्पद्यते यथा—संस्थित इति पदमेतन्मरणसूचकम् ॥ १९ ॥

इत्थमश्लीलप्रपञ्चं विविच्य क्लिष्टं वर्णयति—

## व्यवहितार्थप्रत्ययं क्लिष्टम् ॥ २० ॥

अर्थस्य प्रतीतिरर्थप्रत्ययः । व्यवहितोऽन्तर्हितोऽर्थप्रत्ययो यस्मात् तद् व्यवहितार्थप्रत्ययं पदं क्लिष्टमुच्यते । यथा—

'दत्तात्मजादयितवल्लभवेदिकानां
ज्योत्स्नाजुषां जललवास्तरलं पतन्ति ॥'

दत्तात्मजास्ताराः । तासां दयितश्चन्द्रस्तस्य वल्लभाश्चन्द्रकान्ता उपलाः । तद्वेदिकानामिति । अत्र हि व्यवधानेनार्थप्रत्यय इति क्लिष्टं भवति ॥ २० ॥

सम्प्रति अन्यत् क्लिष्टमुपदिश्यते—

## अरूढार्थत्वात् ॥ २१ ॥

यत्पदमरूढार्थत्वान्नार्थप्रत्यायकं तदपि क्लिष्टं ज्ञेयम् । यथा काञ्चीगुणस्थानमित्यादि ॥ २१ ॥

## अन्त्याभ्यां वाक्यं व्याख्यातम् ॥ २२ ॥

पदार्थदोषेष्वन्त्याभ्यामश्लीलक्लिष्टाभ्यां दोषाभ्यां वाक्यमपि दुष्टं भवतीति व्याख्यातम् अर्थापत्त्या । वाक्यस्य पदजन्यत्वात् । तत्राश्लीलं वाक्यं यथा—न साधनोन्नतिः कार्येति । क्लिष्टं यथा—महापथेन गतवान्महात्मा महतीं गतिमिति ॥ २२ ॥

इति श्रीमन्मुनिमेधाव्रताचार्यकविरत्नविरचितायां व्रतिमङ्गलायां
यास्कीयकाव्यालङ्कारसूत्रवृत्तौ पदपदार्थदोषनिरूपणं
नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

# अथ पञ्चमोऽध्यायः ॥

निदर्शिताः पददोषाः पदार्थदोशश्चेदानीं वाक्यवाक्यार्थदोषान् प्रदर्शयति—

**भिन्नवृत्तयतिभ्रष्टविसन्धीनि वाक्यानि ॥ १ ॥**

दुष्टानि वेदितव्यानि ॥ १ ॥

तान्येव क्रमेण व्याचष्टे—

**स्वलक्षणच्युतवृत्तं भिन्नवृत्तम् ॥ २ ॥**

छन्दःशास्त्रविहितनिजनिजलक्षणेभ्यश्च्युतवृत्तं यद् वाक्यं तद् भिन्नवृत्तमभिधीयते । यथा—

"जगतीगतवस्तुवैभवं चपलसलिलवेगोपमं ध्रुवम् ।"

इत्यत्र वैतालीयद्वितीयचरणे क्रमेण षण्णां लघ्वक्षराणां विन्यसनं वृत्तशास्त्रविरुद्धं तदत्र प्रयुक्तमतो भिन्नवृत्तत्वम् ॥ २ ॥

**विरसविरामं यतिभ्रष्टम् ॥ ३ ॥**

विरसः कर्णकटुर्विरामोऽवसानं यत्र तद् वाक्यं यतिभ्रष्टमुदीर्यते ॥ ३ ॥

**तद् धातुनामभागभेदे स्वरसन्ध्यकरणे प्रायेण ॥ ४ ॥**

तद्यतिभ्रष्टं धातुभागभेदे नामभागभेदे च सति सम्पद्यते । अकृते च स्वरसन्धौ प्रायेण बाहुल्येन । धातुभागभेदे मन्दाक्रान्तायां यथा—

"सत्कीर्तिं व,र्णयति नृपतेः कौमुदीं वाभिरामाम्" ।

नामभागभेदे मन्दाक्रान्तायामेव यथा—

"प्राज्ञानां वा, चममृतमयीं तां निशम्यावनीन्द्रः" ।

मन्दाक्रान्तायाः पादे चतुर्थाक्षरेऽवश्यं विरामः कर्त्तव्य इति नियमः । स च धातुनामभागभेदे कर्णकटुः प्रतीयते विरामः । स्वरसन्धेरकरणे यथा—

परिषदि विदुषां ते अद्भुतां वाचमूचुः" [ मालिनी ] ।

अत्र च 'एङः पदान्तादती'ति सूत्रेण प्राप्ते पूर्वरूपे तदकरणं कर्णकटुत्वे हेतुः । तत्करणे च छन्दोभङ्ग इत्युभयतः पाशारज्जुरतः कविभिरिदमवश्यं त्रितयमपि हेयम् ॥ ४ ॥

## न वृत्तदोषात्पृथग् यतिदोषो वृत्तस्य यत्यात्मकत्वात् ॥ ५ ॥

वृत्तदोषात्पृथग् यतिदोषो न वक्तव्यः । वृत्तस्य यत्यात्मकत्वात् । यत्यात्मकं हि वृत्तमिति भिन्नवृत्त एव यतिभ्रष्टस्यान्तर्भावान्न पृथग्ग्रहणं विधेयमत आह—

## न लक्ष्मणः पृथक्त्वात् ॥ ६ ॥

नायं यतिदोषो वृत्तदोषेऽन्तर्हितो भवितुमर्हति कुत इति चेल्लक्ष्मणो लक्षणस्य पृथक्त्वात् । अन्यद्धि वृत्तानां लक्षणमन्यच्च यतेः । गुरुलघुनियमात्मकं वृत्तं विरामात्मिका च यतिः । तस्माल्लक्षणयोः पार्थक्यम् ॥ ६ ॥

एवं यतिभ्रष्टप्रपञ्चं निरूप्य विसन्धेर्लक्षणमाह—

## विरूपपदसन्धिर्विसन्धिः ॥ ७ ॥

पदानां सन्धिः पदसन्धिः । विरूपोऽयोग्यः पदसन्धिर्यत्र वाक्ये तद् विसन्धीत्युच्यते ॥ ७ ॥

## पदसन्धिवैरूप्यं विश्लेषोऽश्लीलत्वं कष्टत्वं च ॥ ८ ॥

विरूपस्य भावो वैरूप्यं पदसन्धेर्वैरूप्यं पदसन्धिवैरूप्यम् । तद् विश्लेषादिभेदैस्त्रिधा बोध्यम् । तत्र सन्धिप्राप्तौ सन्धेरकरणं विश्लेषः । यथा—

"दयानन्देन अमुना ईशमूर्त्तिर्निराकृता" । अथ च—

सन्धिप्राप्तौ सन्धेरभावादसभ्यस्मृतिश्चेदश्लीलम् । यथा—

"ब्रह्मणा अण्डकोषेण तुल्यं ब्रह्माण्डमाहितमिति" ।

किञ्च सन्धिप्राप्तौ सन्धेरकरणात्कर्णकटु चेत्कष्टत्वम् । यथा—

"इयं पूजा ईदृग् भवति इह एषां जडधियाम्" इति । त इमे वाक्यदोषाः ॥ ८ ॥

इदानीं वाक्यार्थदोषानाह—

## व्यर्थैकार्थसंदिग्धाऽप्रयुक्ताऽपक्रमलोकविद्याविरुद्धानि च ॥ ९ ॥

दूषणानि वाक्यार्थस्यावगन्तव्यानि ॥ ९ ॥

क्रमेण व्याख्यातुमाह—

## व्याहतपूर्वोत्तरार्थं व्यर्थम् ॥ १० ॥

व्याहतौ विरुद्धौ पूर्वोत्तरार्थौ यस्मिँस्तद् व्याहतपूर्वोत्तरार्थं व्यर्थमिति व्याह्रियते । यथा—

"लोकातिगं तस्य चरित्रमेवं
विभाति मूढस्य जनेश्वरस्य ॥"

इह मूढस्य कथं लोकातिगं चरित्रत्वम् । तच्चेत् कथं तस्य मूढत्वम् । तच्चेत्कथं जनेश्वरत्वम् । इति पूर्वापरवाक्यार्थविरोधित्वम् ॥ १० ॥

## उक्तार्थपदमेकार्थम् ॥ ११ ॥

एकवारमुक्तार्थानि पदानि यत्र पुनः प्रयुज्यन्ते तत्समानार्थत्वादेकार्थमिति कथ्यते । यथा—

"चिन्तामोहमये ! जहीहि भगवन् भो भाग्यवन् साम्प्रतम् ।"

अत्र "चिन्तामोहौ, भगवन् भाग्यवन्, अये भो" इति द्वौ द्वौ शब्दावेकार्थावुक्तार्थत्वात्पुनरुक्तदोषभाजौ स्तः ॥ ११ ॥

## न विशेषश्चेत् ॥ १२ ॥

यदि पुनरुक्तपदेषु विशेषार्थप्रतिपत्तिर्न स्यात्तदोक्तार्थपदत्वं दोषः । यदा तु विशेषार्थस्य ज्ञानं भवेत्तदोक्तार्थमपि न दुष्टम् ॥ १२ ॥ यथा—

## धनुर्ज्याध्वनौ धनुःश्रुतिरारूढेः प्रतिपत्त्यै ॥ १३ ॥

'धनुर्ज्याध्वनौ' इत्यत्र ज्याशब्देन धनुषः प्रतिपत्तौ पुनर्धनुर्ग्रहणमारोहणस्य प्रज्ञापनाय । न हि धनुः शब्दमन्तरेण धनुष्यारूढा ज्या धनुर्ज्येति शक्यं विज्ञातुम् । यथा—

'धनुर्ज्याटङ्कारैर्द्रुतमरिदलं वीर ! समरात् ।' ॥ १३ ॥

## कर्णावतंसश्रवणकुण्डलशिरःशेखरेषु कर्णादिनिर्देशः सन्निधेः ॥ १४ ॥

कर्णावतंसादिपदेषु कर्णादीनामवतंसादिशब्दैरुक्तार्थानामपि निर्देशः सन्निधेर्विज्ञानाय। अवतंसः कर्णभूषणम्, कुण्डलं कर्णाभरणम्, शेखरो मुकुटम् । न हि कर्णादिशब्दनिर्देशमन्तरेण कर्णादिसन्निहितानामवतंसादीनां शक्या प्रतिपत्तिः कर्त्तुमिति ।

"दोलाविहारेषु कुमारिकाणां
कर्णावतंसा कलयन्ति कम्पम्" ।
'लीलाचलच्छ्रवणकुण्डलमापतन्ति
क्ष्मापालसंसदि नृपास्तव वीर ! वश्याः ।
"मन्त्रिभिस्सह राजानो मन्त्रणागृहमञ्जसा ।
आययुर्भृङ्गमुखराः शिरःशेखरशालिनः ॥" ॥ १४ ॥

## मुक्ताहारशब्दे मुक्ताशब्दः शुद्धेः ॥ १५ ॥

हारः केवलमुक्तानामिति नियमात्केवलहारशब्देनैव मुक्तार्थलाभे पुनर्मुक्ताशब्दोपादानं स्वच्छताविशेषप्रतिपत्तये विज्ञेयम् । यथा—

'मन्दाकिनीप्रवाहेण प्रावृतः पर्वतेश्वरः ॥
मुक्ताहारेण शुभ्रेण शोभते नु मनोहरः ॥" ॥ १५ ॥

## पुष्पमालाशब्दे पुष्पपदमुत्कर्षस्य ॥ १६ ॥

माला केवलपुष्पाणामिति नियमात्केवलमालाशब्देनैव पुष्पार्थलाभे पुनः पुष्पपदोपादानमुत्कर्षस्य प्रतिपत्तये । यथा—

'यतीन्द्रस्स दयानन्दः पुष्पमालाभिरर्चितः ।
अकारि भद्रपुरुषैर्वाष्पयानाधिरोहणे ॥' ॥ १६ ॥

## करिकलभशब्दे करिशब्दस्ताद्रूप्यस्य प्रतिपत्त्यर्थम् ॥ १७ ॥

कलभः करिशावक इति नियमात्केवलकलभशब्देनैव कर्यर्थलाभे पुनः करिशब्दोपादानं वपुरादिना तादूरूप्यप्रतिपत्तये। तथा—

'त्यज करिकलभ ! त्वं प्रीतिबन्धं करिण्याः।' ॥ १७ ॥

## विशेषणस्य च ॥ १८ ॥

उक्तार्थस्य विशेषणस्यापि विशेषविज्ञानाय पुनः प्रयोगः करणीयः। यथा—'जगाद मधुरां वाचं विशदाक्षरमालिनीम्।' ॥ १८ ॥

## तदिदं प्रयुक्तेषु ॥ १९ ॥

तदिदं सर्वमपि समाधानं महाकविप्रयुक्तेषु पदेषु वाक्येषु वा कर्त्तुं शक्यम्। न सामान्यकविप्रयुक्तेषु। न हि भवति यथा करिकलभ इति तथा 'उष्ट्रकलभ' इत्यपि ॥ १९ ॥

एवमेकार्थनामकं वाक्यार्थदूषणं विविच्य सन्दिग्धलक्षणं वर्णयति—

## संशयकृत् सन्दिग्धम् ॥ २० ॥

यदनेकार्थं पदमेकस्यार्थस्यानियन्त्रणात्प्रकृते संशयकृत् प्रतीयते तत् सन्दिग्धमिति प्रोच्यते। यथा—

'अयमागतो महात्मा भाग्यवशात्किं महापदं लोके' इति। अत्र महात्मा अमहात्मेत्येकं भाग्यवशादभाग्यवशाद्वेति द्वितीयं महापदं महतीमापदं वेति तृतीयं सन्दिग्धम् ॥ २० ॥

## मायादिकल्पितार्थमप्रयुक्तम् ॥ २१ ॥

मायादिना कल्पितोऽर्थो यत्र तन्मायादिकल्पितार्थमप्रयुक्तमिति निगद्यते। मिथ्याप्रतीतिकृन्माया। आदिशब्देन दम्भादिग्रहणम्। यथा—अहं ब्रह्मास्मीति। अत्र चातद्धर्मिणि तद्धर्माध्यवसितिर्माया तत्कल्पितं चात्मनि ब्रह्मत्वम् ॥ २१ ॥

## क्रमहीनार्थमपक्रमम् ॥ २२ ॥

सामान्यसत्त्वानां प्रस्तावे विशेषसत्त्वानां तेभ्यः प्रागेव कथनं क्रमस्तेन हीनो विरुद्धोऽर्थो यत्र तदपक्रमं यथा—

'कीर्त्तिप्रतापौ भवतः सूर्याचन्द्रमसोः समौ ।।'

अत्र कीर्त्तिश्चन्द्रमसा तुल्या प्रतापः सूर्येण तुल्यः । सूर्यस्य पूर्वनिपातनादपक्रमः । अथवा प्रधानस्यार्थस्य प्रथमनिर्देशः क्रमः । तेन हीनोऽर्थो यस्मिँस्तदपक्रमम् । यथा—

'तुरङ्गं मे राजन् वितर वरमातङ्गमथवा ।' ॥ २२ ॥

साम्प्रतं लोकविरुद्धानि कथयति—

## देशकालस्वभावविरुद्धार्थानि लोकविरुद्धानि ॥ २३ ॥

देशकालस्वभावैर्विरुद्धोऽर्थो येषु तानि देशकालस्वभावविरुद्धार्थानि वाक्यानि लोकविरुद्धानि । अर्थद्वारेण लोकविरुद्धत्वं वाक्यानाम् । तत्र देशविरुद्धं यथा—

सौराष्ट्रेष्वस्ति नगरी मथुरा नाम विश्रुता ।
अक्षोटनालिकेराढ्या यस्याः पर्यन्तभूमयः ॥

मथुरा सौराष्ट्रेषु नास्ति न चास्यामक्षोटनालिकेराढ्या भूमयः सन्तीति देशविरुद्धं विशेषणं विद्यते । कालविरुद्धं यथा—'कदम्बकुसुमस्मरे मधौ वनमशोभत ।' अत्र कदम्बानां प्रावृषि कुसुमसमृद्धेर्वसन्तकाले तच्छोभावर्णनं कालविरुद्धमेव । स्वभावविरुद्धं यथा—

'भृङ्गोघैः कलिकाकोशस्तथा भृशमपीड्यत ।
यथा गोष्पदपूरं हि ववर्ष बहुलं मधु ॥'

कलिकानां मकरन्दस्यैतावद् बाहुल्यं स्वभावविरुद्धम् ॥ २३ ॥

इदानीं विद्याविरुद्धानि वर्णयति—

## कला चतुर्वर्गशास्त्रविरुद्धार्थानि विद्याविरुद्धानि ॥२४॥

कलाशास्त्रैश्चतुर्वर्गशास्त्रैश्च विरुद्धोऽर्थो येषु तानि वाक्यानि विद्याविरुद्धानि कथ्यन्ते । तत्र कलाशास्त्रं शिल्पशास्त्रं तद्विरुद्धं यथा—

"सूर्यवेधिनि मोदन्ते द्विपक्षे भवने जनाः" इति अत्र च "चन्द्रवेधि-नवद्वारमेकपक्षं गृहं शिव"मिति कलाशास्त्रेण चन्द्रवेधिस्थानमेव सुखाय भवति न सूर्यवेधीति नियमितं तच्चैकपक्षमेव न द्विपक्षमित्यविनिश्चितमेव तद्विरुद्धमिदम्। चतुर्वर्गशब्देन धर्मार्थकाममोक्षाणां ग्रहणम्। तेषु प्रथमं धर्मशास्त्रविरुद्धं यथा—"शैशवे कृतवधूकरग्रहो यौवने व्रतविशुष्कविग्रहः। वार्द्धके पठनपाठनाग्रहः कोऽप्ययं सुहृदये नवग्रहः॥" अत्र बाल्ये ब्रह्मचर्य-पूर्वकं वेदाद्यध्ययनं यौवने पाणिग्रहणं वृद्धवयसि वानप्रस्थसंन्यासस्वीकरणं धर्मशास्त्रसम्मतं तद्विरुद्धत्वं प्रत्यक्षमेव दृश्यते॥ अर्थशास्त्रविरुद्धं यथा—

'विजित्य शत्रूनयमुग्रतेजसा
महीपतिस्तं दशमांशमाहरन्।
समस्तमर्थं सुकृतादथो जना-
ञ्जिघृक्षुरभ्येति जनाधिवेशनम्॥"

अत्र राज्ञा धनस्य षष्ठांशः प्रजाभ्य आदेयः सुकृतस्य चाष्टम इति नियमा-त्तदधिकधनग्रहणमर्थशास्त्रविरुद्धम्। कामशास्त्रविरुद्धं नात्रोदाह्रियते प्रतिज्ञा-विरोधात्। मोक्षशास्त्रविरुद्धं यथा—

"कर्मणा मुक्तिरेकान्तं प्राप्यते मनुजोत्तमैः" इति।

अत्र "ज्ञानान्मुक्तिः।" "तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाये"ति नियमात् कर्मणा मुक्तिरिति मोक्षशास्त्रविरुद्धम्॥ २४॥

इति श्रीमन्मुनिमेधाव्रताचार्यकविरत्नविरचितायां व्रतिमङ्गलायां
यास्कीयकाव्यालङ्कारसूत्रवृत्तौ वाक्यवाक्यार्थदोषविवेचनार्थः
पञ्चमोऽध्यायः॥ ५॥

---

# अथ षष्ठोऽध्यायः ॥

व्याख्याता वाक्यदोषा वाक्यार्थदोषाश्च । अधुना गुणविवेचनमुपक्रमते यास्काचार्यः—

## काव्यशोभायाः कर्त्तारो धर्मा गुणाः ॥ १ ॥

काव्यस्य शोभा काव्यशोभा तस्याः कर्त्तारो निष्पादयितारो ये धर्मास्ते गुणास्सम्पद्यन्ते । ते च स्वयमेव वक्ष्यन्तेऽग्रे । नन्वलङ्काराणामपि काव्य-शोभाकरत्वात् कथं न गुणत्वमित्यत्राह—

## तदतिशयहेतवस्त्वलङ्काराः ॥ २ ॥

तु शब्दो व्यतिरेकार्थः । तस्याः काव्यशोभाया अतिशयहेतवो वृद्धि-कारणरूपा ये धर्मास्तेऽलङ्कारपदवाच्या ज्ञेयाः । एतावता गुणानां काव्य-शोभाकरत्वमलङ्काराणाञ्च काव्यशोभावर्द्धकत्वमितीयान् भेदः स्वयमुप-पन्नः ॥ २ ॥ तयोर्मध्ये—

## पूर्वे नित्याः ॥ ३ ॥

पूर्वे पूर्वमुपपादिता गुणा एव काव्यशोभाकरत्वान्नित्याः काव्यात्मना सह सर्वदावस्थानान्निश्चला इत्यर्थः । तदितरे तु तन्मूलकत्वान्नित्या इति भेदः ॥३॥ प्रकारेणामुना गुणालङ्कारयोर्भेदमाख्याय सूत्रमुखेन शब्दगुणानाह—

## ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्यो-दारतार्थव्यक्तिकान्तयो बन्धगुणाः ॥ ४ ॥

वेदितव्याः । तानेव स्वयं क्रमेण व्याचष्टे तेषु—

## गाढबन्धत्वमोजः ॥ ५ ॥

बन्धः पदरचना तस्य यद् गाढत्वं परस्परपदार्थापेक्षत्वं तदेव गुण-निरूपणप्रस्तावे ओज इति निगद्यते । अस्योदाहरणम्—

"यो निद्रिताखिलजनाम्बुरुहांशुमाली
पापान्धकाररजनीरजनीप्रियो यः।
यो दीनदुःखवनपावकवारिवाहो
यो कुम्भमानवगजेन्द्रमृगाधिराजः॥" इति
(वृत्तिकारकृते ब्रह्मचर्यशतके श्लोक० ३)॥ ५॥

## शैथिल्यं प्रसादः॥ ६॥

बन्धस्य यच्छैथिल्यं शिथिलतयाऽवस्थानं पदानां परस्परानपेक्षत्वमिति यावत् तदेव प्रसादपदवाच्यम्। उदाहरणं यथा—

"तदेषणानां त्रयमाजिगीषु—
र्योगी बुभूषुर्वितनोमि योगम्।
याचे बलं दिव्यमतः प्रभो त्वां
कृपां कृपालो कुरु भक्तसूनौ॥" इति।
(मत्कृतायां दिव्यानन्दलहर्यां श्लोकः ४०)॥ ६॥

नन्वयमोजो विपर्ययात्मा दोषः कथं गुण इत्यत्राह—

## गुणः संप्लवात्॥ ७॥

गाढबन्धात्मकेनौजसा सह संप्लवात्संसर्गात् पदशैथिल्यात्मा प्रसादो गुण एव न दोषः। परन्तु—

## न शुद्धः॥ ८॥

बन्धे केवलस्य पदशैथिल्यात्मनः प्रसादस्य निवेशस्तु दोष एव न गुणः। ओजसा सह सम्पृक्तस्यैव प्रसादस्य गुणत्वं न केवलस्य॥ ८॥

ननु परस्परविरुद्धधर्मवतोरोजःप्रसादयोः कथमेकस्मिन्निबन्धे सम्प्लव इत्यत्राह—

## स त्वनुभवसिद्धः॥ ९॥

स संसर्गस्तु रत्नविशेषविज्ञानवत्सहृदयहृदयानामनुभवगम्य एव न कथयितुमर्हस्तस्यानिर्वचनीयत्वात्। अत्र श्लोकः—

'करुणप्रेक्षणीयेषु सम्प्लवः सुखदुःखयोः।
यथानुभवतः सिद्धस्तथैवौजःप्रसादयोः॥" ॥ ९॥

अन्यदप्याह—

## साम्योत्कर्षौ च ॥ १० ॥

साम्यं समता, उत्कर्ष आधिक्यम् । बन्धे युगपत्प्राप्तयोरोजःप्रसादयोः साम्योत्कर्षावप्यनुभववेद्यावेव । अनुभवरसिका एव कवितायाः परिपाके निविष्टाः क्वचिदोजसः प्रसादेन साम्यं क्वचिदाधिक्यं क्वचित्प्रसादस्याप्योजसा सह साम्यं कुत्रचिदाधिक्यं क्वचिदेकापेक्षयाऽपरस्याधिक्यं कुत्रचिन्न्यूनतेति समास्वदन्ते न सामान्या इति भावः । साम्यं यथा—

"प्रयोगसंहारपुरस्सरं गुरो—
रशिक्षितास्त्रं विधिवद् व्रतिव्रजः ।
अनेकयुद्धायुधकौशलं तथा
यथाक्रमं धैर्यधनो विचक्षणः ॥

( गुरुकुलशतके श्लोकः ६६ ) ।

क्वचिदोजः प्रसादादुत्कृष्टम्—

"अशेषवेदागमपारगामी श्रीब्रह्मचारी वरदेहधारी ।
तपोधनोऽगस्त्यसुविप्रसूनुर्मित्रैरितो राजसभामयासीत् ॥"

( गुरुकुलशतके श्लोकः ७७ ) ।

क्वचिदोजसः प्रसादस्योत्कर्षः—[ यथा प्रकृतिसौन्दर्ये ]

"नभः प्रसन्नं सलिलं प्रसन्नं
निशाः प्रसन्ना द्विजचन्द्ररम्याः ।
इयं वसन्ते वितता वसन्ती
प्रसादलक्ष्मीः प्रतिवस्तु भाति ॥" ॥ १० ॥

प्रकारेणामुना प्रसादप्रपञ्चं निरूप्य श्लेषमाह—

## मसृणत्वं श्लेषः ॥ ११ ॥

प्रबन्धे बहूनां पदानामप्येकवद् भानं मसृणता तस्य भावस्तत्त्वं तदेव श्लेषपदवाच्यम् । यथा चिक्कणतया वस्तुद्वयमेकवत्प्रतीयते तद्वदेवातिसरसतया बहून्यपि पदानि यत्रैकवदाभासन्ते स श्लेष इति भावः । यथा—

अपास्य सत्यावरणं सुवर्णजं प्रलोभनं मोहनमात्मनो जनः ।
समीक्ष्य सत्यं शिवसुन्दरेश्वरं परं सुखं ब्रह्म भवेद् भवे सुखी
॥ ११ ॥

## मार्गाऽभेदः समता ॥ १२ ॥

प्रसङ्गात्पूर्वतः प्रचलितस्य क्रमस्य पद्ये प्रबन्धे वा अन्तपर्यन्तमत्यागः समतेति समुच्यते । यस्मिन् पद्ये यस्य पदार्थस्य वर्णनमुत्थाप्यते तस्य तत्रैव समापनं समतेति भावः ॥

उदाहरणं यथा—

सम समागम्य सरस्वती स्वयं द्वयं सदा श्रीश्च मुदापि चञ्चला ।
परस्परं प्रेमपरम्परां परां वितन्वदेतं नृपतिं निषेवते ॥

( प्रकृतिसौन्दर्ये ६ । ६ ) ॥ १२ ॥

## आरोहावरोहक्रमः समाधिः ॥ १३ ॥

पद्ये प्रबन्धे वा पदानां तारतम्येन वर्धनमारोहः किञ्चित्करणमवरोहस्तयोः पूर्वापरपर्यालोचनेन स्थिरीकरणं क्रमः स एव समाधिरिति प्रोच्यते ।

तदुदाहरणं यथा—

"या सामग्री भुवनरचनायामुपादानहेतु—
र्या चित्राङ्गी रमयति मुहुर्लीलया मर्त्यवृन्दम् ।
या सर्वेषामृतुवरगणैर्नन्दयित्री जनानां
सेयं भूयान्निखिलजगतां भूयसे मङ्गलाय ॥"

नान्दीयम् । अस्यां पूर्वमारोहः पश्चादवरोहश्च स्फुटमुपलभ्यते ॥ १३ ॥

अत्र भिद्यते—

## न पृथगारोहावरोहयोरोजःप्रसादरूपत्वात् ॥ १४ ॥

आरोहस्यौजसि, अवरोहस्य च प्रसादेऽन्तर्भावात्समाधिः पृथग्गुणो न वाच्य इति सूत्रार्थः ॥ १४ ॥

इदानीं पूर्वपक्षमिममवधीरयन्नाह—

**न सम्पृक्तत्वात् ॥ १५ ॥**

नदीवेणिकावदोजःप्रसादयोः सम्पृक्तत्वान्न समाधेस्तयोर्मध्येऽन्तर्भाव इति कृत्वा पृथक् समाधेर्ग्रहणं युक्तमेवेति सौत्रोऽर्थः। यत्र यत्रौजस्तत्र तत्र प्रसाद इति सम्पृक्तत्वम्। नायं समाधौ नियम इति कृत्वा पृथग्ग्रहणमावश्यकम् ॥ १५॥

अन्यदपि पार्थक्ये कारणमाह—

**अनैकान्त्याच्च ॥ १६ ॥**

एकान्तस्य भाव ऐकान्त्यं न ऐकान्त्यमनैकान्त्यं तस्मादनैकान्त्यादनवश्यंभावित्वादपि समाधेः पृथग्ग्रहणं करणीयम्। न चायमवश्यंभावो नियमो यदोजस्यारोहस्य प्रसादे चावरोहस्यावश्यं समावेशः स्यादतः पार्थक्यमावश्यकम् ॥ १६ ॥ किञ्च—

**ओजःप्रसादयोः क्वचिद् भागे तीव्रावस्थायां तावितिचेदभ्युपगमः ॥ १७ ॥**

यद्योजःप्रसादयोस्तीव्रावस्थायां क्वचिदेकदेशे तावारोहावरोहौ भवत इति व्यवस्थाप्यते तदास्माकमप्यभिमतमेवेति योगाभिप्रायः । तीव्रावस्थापठनावसरे द्रुतावस्था तस्यामेकदेशस्य सम्भवात् ॥ १७ ॥

एवमपि समाधेस्तत्रान्तर्भावो न । कुत इति चेत्—

**विशेषापेक्षत्वात्तयोः ॥ १८ ॥**

तयोरोजःप्रसादयोर्विशेषापेक्षत्वादारोहावरोहक्रमस्य च स्वयं विशेषत्वात् । विशेषो गुणात्मेति प्रागुक्तम् । आरोहावरोहौ गुणौ तदात्मको विशेषस्तदपेक्षावोजःप्रसादाविति महदन्तरम् ॥ १८ ॥

एतदेव विशदयन्नाह—

**आरोहावरोहनिमित्तं समाधिराख्यायते ॥ १९ ॥**

समाधिर्नाम शब्दगुण आरोहावरोहयोः कारणमाख्यायते न तत्स्वरूपः । एतावता निमित्तनिमित्तिभावाभ्युपगमे सिद्धे स्वनिष्ठयोरारोहावरोहयोर्विशेषापेक्षे ओजसि प्रसादे च नान्तर्भाव इति ध्वन्यते ॥ १९ ॥

## क्रमविधानार्थत्वाद्वा ॥ २० ॥

क्रमविधानमेवार्थः प्रयोजनं ययोस्तौ क्रमविधानार्थौ आरोहावरोहौ तयोर्भावस्तत्त्वं तस्मादपि हेतोः समाधेरोजःप्रसादाभ्यां पृथक्करणमिष्यत इति सूत्रार्थः ॥ २० ॥

प्रकारेणामुना समाधिप्रपञ्चं निरूप्य साम्प्रतं माधुर्यमाह—

## पृथक्पदत्वं माधुर्यम् ॥ २१ ॥

मधुरस्य भावो माधुर्यं पदानामास्वाद्यत्वम् । बन्धे यत् पृथक्पदत्वं तन्माधुर्यमित्युच्यते । समासजन्यपददैर्घ्यविनिवृत्तिपरकमेतत् । पृथक्पदवति काव्ये यथा माधुर्यमनुभूयते न तथा समस्तपदवति काव्ये—इति भरतमुनेर्मतम् ॥ अस्योदाहरणम्—

तपस्विवरमण्डितं सुपवनं वनं पावनं
यदेत्य गिरिजा गजा मृगगणाः सुपक्ष्माननाः ।
वसन्ति रिपुतां विहाय सुहृदो यथा ते मिथः
सदा वितनुते सुमङ्गलमहो ! सतां सङ्गमः ॥" २१ ॥

## अजरठत्वं सौकुमार्यम् ॥ २२ ॥

सुकुमारस्य भावः सौकुमार्यं कोमलत्वमिति यावत् । बन्धे यदजरठत्वमकठोरत्वं सरलतया पदानामवस्थापनं तदेव सौकुमार्यमिति प्रोच्यते । अत्युल्वणपदस्थापननिवृत्तिपरकमिदम् । यथा—

"विलीनानां प्रायो व्यधित निगमानां य उदयं
चलं धर्मैश्वर्यं पुनरपि पदं पूर्वमनयत् ।
स्वतन्त्रत्वस्थेमं भुवि विमलभावं प्रथितवान्
दयानन्दं वन्दे किमिव न तमानन्दजनकम् ॥"
( दयानन्दलहर्याम् श्लोकः २४ ) ॥ २२ ॥

## विकटत्वमुदारता ॥ २३ ॥

बन्धे यद् विकटत्वं लीलायमानपदत्वं तदुदारतेति गम्यते । येन गुणेन पद्ये पदानि नृत्यन्तीव प्रतीयन्ते सोऽयमुदारताख्यो गुण इति भरतः । उदारता चात्रानेकार्थद्योतकता ।

उदाहरणं यथा—

"निगमविमलगङ्गातीरमागम्य रम्यं
प्रभुरसफलविद्यारण्यपुण्यं प्रशान्तम् ।
सकलभुवनलोकाः शोकमोकं कुरुध्वं
वरमिति वदति द्रागीशसन्देश एषः ॥" इति ॥ २३ ॥

## अर्थव्यक्तिहेतुत्वमर्थव्यक्तिः ॥ २४ ॥

अर्थव्यक्तिरर्थप्राकट्यं तद्धेतुत्वमर्थव्यक्तिहेतुत्वम् । बन्धे झटित्यर्थबोधकतानिदानमेवार्थव्यक्तिपदवाच्यम् ।

उदाहरणं यथा—

"अध्युष्य दिव्याश्रममेष कश्चित्
कालं महर्षेः कृपया सुधीरः ।
दिव्यास्त्रशिक्षां परिगृह्य तस्मात्
तदाज्ञया पञ्चवटीं प्रतस्थे ॥"

( गुरुकुलशतके श्लोकः १०१ ) ॥ २४ ॥

## औज्ज्वल्यं कान्तिः ॥ २५ ॥

उज्ज्वलस्य भाव औज्ज्वल्यं चमत्कारापरपर्यायम् । बन्धे यदौज्ज्वल्यं पदानामुज्ज्वलतयाऽवस्थानं तदेव कान्तिरित्युच्यते । यथा—

"आनन्दिताशेषबुधान्तरङ्गा—सद्यः कृतानाथजनार्तिभङ्गा ।
दयोत्तरङ्गा मुनिसूक्तिगङ्गा—ममान्तरङ्गाण्यमलीकरोतु ॥"

( दयानन्दलहर्याम् श्लोकः २१ ) ॥ २५ ॥

प्रकारेणामुना दशसंख्याकाञ्छब्दगुणान् निरूप्य तत्सद्भावोपपत्तये साम्प्रतमाह—

## नासन्तः सद्वेद्यत्वात् ॥ २६ ॥

इमे गुणा असन्तोऽविद्यमाना इति न, किन्तु विद्यमाना एव । कुत इति चेत् सद्वेद्यत्वात् सद्भिरास्वादनीयत्वात् । सन्त एवेमे सद्भिरास्वाद्यन्ते—असतामनास्वाद्यत्वात् ॥ २६ ॥

## न भ्रान्ता निष्कम्पत्वात् ॥ २७ ॥

न चेमे गुणा भ्रान्ताश्चञ्चलाः किन्तु निश्चला एव । कुत इति चेन्निष्कम्पत्वाद् गुणविषयकप्रवृत्तेर्निश्चलत्वात् । निश्चला हि सतां गुणेषु नैसर्गिकी प्रवृत्तिः ॥ २७ ॥

## न पाठधर्माः सर्वत्राऽदृष्टेः ॥ २८ ॥

न चेमे गुणाः केवलपाठधर्माः केवलशब्दनिष्ठाः किन्तु—अर्थवच्छब्दनिष्ठाः । कथमिति चेत्सर्वत्राऽदृष्टेः । सर्वत्र सामान्यतया शब्दमात्रे शून्यार्थवत् पदबन्धेऽपीत्यर्थः । तेषामदृष्टत्वाददर्शनादिति भावः । यदीमे पाठधर्मास्स्युस्तर्हि विशेषानपेक्षतया सर्वत्रैषां प्रतीतिस्स्यात् । न चैवं दृश्यते । विशेषापेक्षयैवैषां प्रवृत्तिः स च गुणात्मेति सर्वमवदातम् ॥ २८ ॥

श्लोकाश्चात्र भवन्ति—[ वामनपण्डितेन सङ्गृहीता अत्रोद्ध्रियन्ते । ]

पदन्यासस्य गाढत्वं वदन्त्योजः कवीश्वराः ।
अनेनाधिष्ठिताः प्रायः शब्दाः श्रोत्ररसायनम् ॥ १ ॥
श्लथत्वमोजसा मिश्रं प्रसादं च प्रचक्षते ।
अनेन न विना सत्यं स्वदते पदपद्धतिः ॥ २ ॥
यत्रैकपदवद्भावः पदानां भूयसामपि ।
अनालक्षितसन्धीनां स श्लेषः परमो गुणः ॥ ३ ॥
प्रतिपादं प्रतिश्लोक—मेकमार्गपरिग्रहः ।
दुर्बन्धो दुर्विभावश्च समतेति मतो गुणः ॥ ४ ॥

आरोहन्त्यवरोहन्ति क्रमेण यतयो हि यत् ।
समाधिर्नाम स गुणस्तेन पूता सरस्वती ॥ ५ ॥
बन्धे पृथक्पदत्वं च माधुर्यमुदितं बुधैः ।
अनेन हि पदन्यासाः कामं धारामधुश्च्युतः ॥ ६ ॥
बन्धस्याजरठत्वं तत् सौकुमार्यमुदाहृतम् ।
एतेन वर्जिता वाचो रूक्षत्वान्न श्रुतिक्षमाः ॥ ७ ॥
विकटत्वं हि बन्धस्य कथयन्ति ह्युदारताम् ।
वैचित्र्यं न प्रपद्यन्ते यया शून्याः पदक्रमाः ॥ ८ ॥
पश्चादिव गतिर्वाचः पुरस्तादिव वस्तुनः ।
यत्रार्थव्यक्तिहेतुत्वात्सोऽर्थव्यक्तिः स्मृतो गुणः ॥ ९ ॥
औज्ज्वल्यं कान्तिरित्याहुर्गुणं गुणविशारदाः ।
पुराणचित्रस्थानीयं तेन बन्ध्यं कवेर्वचः ॥ १० ॥
यथा हि च्छिद्यते रेखा चतुरं चित्रपण्डितैः ।
तथैव वागपि प्राज्ञैः समस्तगुणगुम्फिता ॥ ११ ॥

इति श्रीमन्मुनिमेधाव्रताचार्यकविरत्नविरचितायां व्रतिमङ्गलायां
यास्कीयकाव्यालङ्कारसूत्रवृत्तौ शब्दगुणविवेचनात्मकः
षष्ठोऽध्यायः ॥ ६ ॥

---

# अथ सप्तमोऽध्यायः ॥

निदर्शिता यथायथं शब्दगुणाः । इदानीमर्थगुणवर्णनायोद्युङ्क्ते यास्कमुनिः—

## त एवार्थगुणाः ॥ १ ॥

पूर्वस्मिन्नध्याये वर्णिता ओजःप्रसादादयो ये दशशब्दगुणास्त एव नामभेदेनार्थगुणा अपि वेदनीयाः ॥ १ ॥

अधुना वाच्यवाचकद्वारेण शब्दगुणानामर्थगुणानाञ्च भेदं प्रदर्शयति । यथा—

## अर्थस्य प्रौढिरोजः ॥ २ ॥

पूर्वं 'गाढबन्धत्वमोज' इति प्रतिपादितमिदानीं यदर्थस्याभिधेयस्य प्रौढत्वं परिपुष्टत्वं तदोज इति भण्यते । पूर्वत्र शब्दानां गाढबन्धत्वमत्र चार्थस्य गाढबन्धत्वमित्येतावान् भेदः । उदाहरणं यथा—

"तपोधनैर्ब्रह्मरतैः क्रतुक्रिया-
दिनक्षपासन्धिसुमन्त्रघोषणा ।
परेशभक्तिप्रवणात्ममङ्गला
प्रबोधवर्षा विदधे तदाश्रमे ॥" ॥ २ ॥

( गुरुकुलशतके श्लोकः ७२ ) ।

## अर्थवैमल्यं प्रसादः ॥ ३ ॥

प्राग् "शैथिल्यं प्रसाद' इति प्रतिपादितमिदानीमर्थस्य यद् वैमल्यं प्रयोजकमात्रपरिग्रहात्मकं तदेव प्रसादशब्देनोच्यते । पूर्वत्र शब्दगतं शैथिल्य-मत्र चार्थगतं वैमल्यमित्येतावान् भेदः । यथा—

'राजा भवान् विविधराज्यसुकर्मलग्न-
स्त्यागी त्वहं पठनपाठनकार्यमग्नः ।
तच्छ्रीमता सममहं तु कथं चलेयं
श्रुत्वेति साधुवचनं नृपतिः स खिन्नः ॥''
( ब्रह्मर्षिविरजानन्दचरिते स० ३ श्लो० ४० ) ।

मत्कृतेषु महाकाव्यादिसकलकाव्येषु प्रसादगुणः साम्राज्यं प्रथयतितमाम् ॥ ३ ॥

## घटना श्लेषः ॥ ४ ॥

पूर्वं 'मसृणत्वं श्लेषः' इति व्याख्यातमधुनार्थस्य घटनाक्रमकौटिल्यानुल्वणत्वोपपत्तियोगरूपा श्लेषशब्देनाभिधीयते । पूर्वत्र शब्दगतं मसृणत्वमत्र चार्थस्य घटनं याथातथ्येनावस्थानमितीयान् भेदः । यथा—

''सत्यं वेदसुसम्मतं मतमयं सम्मन्यमानोऽतुलं
शास्त्रज्ञानसमुद्रगाहनशुचिप्रज्ञाधनाढ्योऽनिशम् ।
शास्त्रार्थप्रधने प्रकाण्डविबुधाञ् जित्वाऽद्भुतप्रज्ञया
प्रज्ञालोचनदीप्तिमान् विजयते संन्यासिसम्राड् भुवि ॥''
( ब्रह्मर्षिविरजानन्दचरिते स० ६ श्लो० २७ ) ॥ ४ ॥

## अवैषम्यं समता ॥ ५ ॥

पूर्वं ''मार्गाभेदः समतेति'' प्रतिपादितमिदानीमर्थस्य यदवैषम्यं मार्दवं सैव समतेति कथ्यते । पूर्वत्र शब्दगतं प्रस्तुतमार्गात्यजनमत्र चार्थगतं मार्दवमितीयान् भेदः ॥ ५ ॥ अथवा—

## सुगमत्वं वाऽवैषम्यमिति ॥ ६ ॥

अवैषम्यमिति यत्पदं पूर्वोक्तसूत्रे कथितं तस्य सुगमत्वमित्यर्थः करणीयः । एतावतार्थस्य यत्सुगमत्वं तदेव समतापदवाच्यमिति भावः । अवैषम्यमित्यनेन मृदुता लक्ष्यते तया च सुगमतेति पारम्पर्यम् । यथा—

'निरम्बुदं व्योम विनिर्मलं जलं
प्रभञ्जनो मानसरञ्जनो मृदुः ।
मनोऽभिरामाऽमलचन्द्रचन्द्रिका
न किं प्रशंसन्ति शरद्वरश्रियम् ॥" ॥ ६ ॥

( प्रकृतिसौन्दर्ये अं० ५ श्लो० १४ )

## अर्थदृष्टिः समाधिः ॥ ७ ॥

पूर्वमारोहावरोहक्रमः समाधिरिति निगदितमिदानीमर्थस्य दर्शनमेकाग्रतया चिन्तनं समाधिरिति प्रोच्यते । पूर्वत्र शब्दगतमारोहणमवरोहणमत्र चार्थस्य विचारणमितीयान् भेदः । यथा —

"आनन्ददिव्यामृतवर्षिणीं तां
संसारतापावलिनाशनिष्णाम् ।
योगेन्द्रसंसिद्धिमिवाद्रिखण्डे
कादम्बिनीं कौतुकवाँल्लुलोके ॥" ॥ ७ ॥

( दयानन्ददिग्विजयमहाकाव्ये स० ८ श्लो० ३५ )

साम्प्रतं यस्यार्थस्य दर्शनं समाधिरित्याख्यायते तस्य द्वैविध्यं दर्शयन् व्याहरति—

## अर्थो द्विविधोऽयोनिरन्यच्छायायोनिश्च ॥ ८ ॥

यस्यार्थस्य दर्शनं समाधिरित्याख्यायते सोऽर्थो द्विधा वेदितव्यः । अयोनिराद्य इतरस्त्वन्यच्छायायोनिः । योनिः कारणं न विद्यते योनिः कारणं यस्य स, अयोनिः स्वसत्तयाऽवस्थित इत्यर्थः । अन्यस्य च्छाया अन्यच्छाया सा योनिर्यस्य स अन्यच्छायायोनिः । बिम्बप्रतिबिम्बभावेनावस्थित इति भावः ॥ ८ ॥ तयोरुभयोर्मध्ये—

## आद्यो व्यक्तः सूक्ष्मश्च ॥ ६ ॥

स्वसत्तयाऽवस्थित आद्योऽयोनिरर्थो द्विधा=व्यक्तः सूक्ष्मश्च । सत्वरमात्मगतार्थसमर्पणाद् व्यक्तः प्राकट्यमाप्त एकः । अपरस्तु चिरकालचिन्तनसमुत्थितविविधभावगर्भतयाऽदर्शनमाप्तः सूक्ष्मपदवाच्यः ॥ ६ ॥

साम्प्रतमपरस्य पुनर्द्वैविध्यमाह—

## सूक्ष्मो भाव्यो वासनीयश्च ॥ १० ॥

सूक्ष्मदृष्ट्या निरूपणीयोऽर्थो द्विधा पुनः। भाव्यो वासनीयश्च। तत्र भावयितुं शीघ्रं निरूपयितुं योग्यो भाव्यः। चित्तैकाग्रतावेद्यो वासनीयः। वासना चात्र वस्तुतत्त्वावगाहनम्। वासनया निर्वृत्तो वासनीयः ॥ १० ॥

प्रकारेणामुना समाधिप्रपञ्चं निरूप्य माधुर्यमाह—

## उक्तिवैचित्र्यं माधुर्यम् ॥ ११ ॥

पूर्वं 'पृथक्पदत्वं माधुर्यम्'' इति प्रतिपादितमिदानीमर्थोक्तेर्यद् वैचित्र्यं तन्माधुर्यमिति कथ्यते। पूर्वं शब्दगतं पार्थक्यमत्र चार्थोक्तेर्वैचित्र्यमितीयान् भेदः। यथा—

"तमोमये वर्त्मनि गच्छतो नु—गुरूपदेशः क्षणमात्रदीप्तः।
यथा भवेदम्बुदकृष्णकाये—विद्युत्प्रकाशोऽपि तथा दिदीपे ॥"

( दयानन्ददिग्विजयमहाकाव्ये स० ८ श्लो० ३७ )

## अपारुष्यं सौकुमार्यम् ॥ १२ ॥

प्राग् "अजरठत्वं सौकुमार्यम्" इति प्रतिपादितमिदानीमर्थस्य यदपारुष्यमकठोरत्वं तत्सौकुमार्यमित्युच्यते। पूर्वत्र शब्दगतं मार्दवमत्र चार्थगतमित्येतावान् भेदः यथा—

"इति वाचमुदीर्य योगधी—रसुरोधं विधिरन्ध्रवर्त्मना।
प्रणवस्वनसंगतानसून् बहिरुत्क्रास्य ययौ परं पदम् ॥"

"स भवान् ब्रह्मरसे पुना रतः ॥"

( दयानन्ददिग्विजयमहाकाव्ये स० २७ श्लो० १०४ व ११६ )

"गतवान् विष्णुपदं मुदन्वितः।"

( नारायणस्वामिचरिते स० १२ श्लो० ३२ )

"रसमये लिल्ये परब्रह्मणि।"

( ब्रह्मर्षिविरजानन्दचरिते स० १० श्लो० ३५ )

अत्र 'मृत' इति स्थाने 'परं पदं ययौ' 'विष्णुपदं गतवान्' इत्यादि-कथनेनापारुष्यम् ॥ १२ ॥

## अग्राम्यत्वमुदारता ॥ १३ ॥

पूर्वं "विकटत्वमुदारतेति" प्रतिपादितमिदानीं ग्राम्यार्थप्रसङ्गे यदग्राम्यार्थ-कथनं यद्वा अश्लीलार्थप्रसङ्गे अनश्लीलार्थवर्णनं तदेवोदारताशब्देनोपादीयते । पूर्वत्र शब्दगतं विकटत्वमत्रार्थस्याग्राम्यत्वमित्येतावान् भेदः । अस्योदाहरणं मत्प्रणीतकाव्यमात्रं तत्र च पद्यमात्रम् । यथा—

"सौन्दर्यगुणसम्पन्ना नारीव निरलङ्कृता ।
वाणी सत्यवती कस्मै नारोचत मुनेः प्रिया ॥"
"शुकदेवं यथा रम्भा न हावैर्जेतुमीश्वरा ।
ब्रह्मनिष्ठं यतीन्द्रं तं गणिका दानवेरिता" ॥ १३ ॥
( दयानन्ददिग्विजयमहाकाव्ये स० १३ श्लो० १८—२४ )

## वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः ॥ १४ ॥

प्राग् "अर्थव्यक्तिहेतुत्वमर्थव्यक्तिरि"ति निगदितमिदानीमनेकवस्तूनाम-नेकस्वभावानाञ्च यत्स्फुटत्वं प्रव्यक्तत्वं तदेवार्थव्यक्तिपदेन भण्यते । पूर्वत्र शब्दगतमर्थव्यक्तिहेतुत्वमत्र चार्थगतं वस्तुस्वभावयोः स्फुटत्वमित्येतावान् भेदः । यथा—

"छायासु गावः सलिले महिष्यः कुञ्जे मयूरा विपिने कुरङ्गाः ।
नीडे विहङ्गाः कुसुमेषु भृङ्गा निषेदुरुग्रांशुमयूखतप्ताः ॥" ॥१४॥
( दयानन्ददिग्विजयमहाकाव्ये स० ८ श्लो० २६ )

## दीप्तरसत्वं कान्तिः ॥ १५ ॥

पूर्वम् 'औज्ज्वल्यं कान्ति'रिति वर्णितं साम्प्रतमर्थे करुणवीरादिरसानां यद् दीप्तत्वं तत् कान्तिपदेन व्यवह्रियते । पूर्वं बन्धगतमौज्ज्वल्यमत्र चार्थगतं रसानां व्यक्तत्वमित्येतावान् भेदः । उदाहरणं यथा—

"लभतां शरणं शरण्य ! हे ! श्रुतिविद्या क्व दिवंगते त्वयि ।
अवलम्बनमेकमेव यन्मुखमस्यास्तव सोमम‌ञ्जलम् ॥"

[ अत्र करुणरसः ]

"त्वां चूर्णयामि शठकर्णक ! तूर्णमेव
रे लम्बकर्ण ! तव शीर्णमवेहि शीर्षम् ।
दुर्वर्ण ! कर्णवसतेरपयाहि सद्यो
नो चेत्तवाद्य शरणं मरणं विना नो ॥" ॥ १५ ॥

[ अत्र वीररस उद्दीप्यते ]

[ दयानन्ददिग्विजयमहाकाव्ये स० २७-१५ श्लो० १२६-१२२ ॥ ]

इति श्रीमन्मुनिमेधाव्रताचार्यकविरत्नविरचितायां व्रतिमङ्गलायां
यास्कीयकाव्यालङ्कारसूत्रवृत्तौ अर्थगुणविवेचनं
नाम सप्तमोऽध्यायः ॥ ७ ॥

---

# अथाष्टमोऽध्यायः ॥

निर्दिष्टा यथायथं शब्दगुणा अर्थगुणाश्च । अधुना शब्दालङ्कारं व्याचष्टे मुनिवरः—

**पदमनेकार्थमक्षरं वाऽऽवृत्तं स्थाननियमे यमकम् ॥१॥**

स्थाननियमे सत्यनेकार्थमक्षरं पदं वा आवृत्तं पुनः पुनः पठितं सद् यमकमुदीर्यते ॥ १ ॥

**पादः पादस्यैकस्यानेकस्य चादिमध्यान्तभागाः स्थानानि ॥ २ ॥**

पूर्वपादावृत्त्यापि यमकं भवतीति सूचनाय सूत्रे पादग्रहणम् । पादश्चतुर्थभाग इति पिङ्गलच्छन्दःसूत्रम् । एतावता समस्तपादस्तथा तस्यैकस्यानेकस्य वा पादस्यादिमध्यान्तभागाःऽयमकस्थानानि बोध्यानि । अवगतमियता पूर्णपादयमकं पादादियमकं पादमध्ययमकं पादान्तयमकञ्च । तत्र पादादियमकं यथा—

"रसमयं समयं स निनाय तैः ॥"
"रविरुचिर्विरुचिर्विषयेष्वसौ ॥"
( दयानन्ददिग्विजये स० ६ श्लो० ४१–४३ )

"स सहसा सहसाधुभिराश्रितम् ॥"
"सनगरं नगरम्यवनं जगत् ॥"
( दयानन्ददिग्विजये स० ६ श्लो० ३२–३३ )

पादमध्ययमकं यथा—

"श्रीनिर्जितान्यनगरी नगरीतिबद्धा ।
सेयं विभाति नगरी न गरीयसी किम् ॥"
( प्रकृतिसौन्दर्ये अं० ६ श्लो० १६ )

पादान्तयमकं यथा—

"विपक्षपक्षाश्रितभूभुजांभुजां"-भुजाबलेनायमखण्डयन्मुहुः ॥"
"गुरुकुलं रचितं वसता सता-व्रतिवर! व्रतितां भवताऽवता ॥"
( प्रकृतिसौन्दर्ये ग्रं० ६ श्लो० ४ )

पादमध्ययमकम्—

"व्याख्यानगीष्पतिरयं तिरयँस्तमांसि।"
( दयानन्ददिग्विजये स० १५ श्लो० ५५ )

प्रत्येकपादादियमकम्—

"हन्त हन्तररातीनां धीरधीरर्चिता तव।
कामं कामन्दकीनीतिरस्या रस्या दिवानिशम् ॥"

पादयोरादियमकम्—

"भ्रमर! द्रुमपुष्पाणि भ्रम रत्यै पिबन्मधु।
का कुन्दकुसुमे प्रीतिः काकुं दत्त्वा विरौषि किम् ॥"

एकान्तरपादान्तयमकम्—

"उद्वेजयति भूतानि यस्य राज्ञः कुशासनम्।
सिंहासनवियुक्तस्य तस्य क्षिप्रं कुशासनम् ॥"

समस्तपादान्तयमकं यथा—

"करिहरिहरिणानां मण्डलीमण्डितायां
नवहरिततृणानां कन्दलीपण्डितायाम्।
उपलमणिविचित्रैर्धातुभिश्चित्रितायां
विलसति यतिवृन्दं शृङ्गवृक्षावृतायाम् ॥" इति ॥ २ ॥

साम्प्रतमस्य प्रकर्षोपायमाह—

भङ्गादुत्कर्षः ॥ ३ ॥

अस्य शब्दालङ्कारमुख्यस्य यमकालङ्कारस्य वक्ष्यमाणभङ्गाद् भङ्गमार्गादिति यावद् उत्कर्षो भवति ॥ ३ ॥

इदानीं तमेवाह—

## शृङ्खला परिवर्तकश्चूर्णमिति भङ्गमार्गः ॥ ४ ॥

त्रिधा वेदनीय इति शेषः ॥ ४ ॥ तमधुना स्वयं वदति, तत्र—

## वर्णविच्छेदचलनं शृङ्खला ॥ ५ ॥

वर्णस्य विच्छेदः पृथग्भवनं वर्णविच्छेदस्तस्य चलनमितस्ततो गमनं भवनं शृङ्खलेति निगद्यते । यथा—"रविरुचि"रित्यत्र रवीत्यस्य रुचिरित्यतः पृथक्करणम् । अन्यत्राप्येतत्सूह्यम् ॥ ५ ॥

## सङ्गविनिवृत्तौ स्वरूपापत्तिः परिवर्तकः ॥ ६ ॥

अन्यवर्णसंसर्गः संगस्तस्य विनिवृत्तौ सत्यां स्वस्य स्वरूपस्यापत्तिः प्राप्तिः परिवर्त्तक इति कथ्यते । यथा—'भवताऽवता' इत्यत्र भवतेत्यस्य पृथक्करणे अवतेति स्वरूपावस्थानम् ॥ ६ ॥

## पिण्डाक्षरलोपे स्वरूपलोपश्चूर्णम् ॥ ७ ॥

पिण्डाक्षरस्य संयुक्ताक्षरस्य लोपे सति स्वरूपस्य लोपश्चूर्णमिति प्रोच्यते । यथा—' मन्ये पूर्णनिदानयुक्तिरयति प्रायो गदं सद्रसैः ।" इति पद्यचरणे युक्तिरित्येकं पदं तत्र क्ती ति संयुक्ताक्षरं तद्गताक्षरविभागे युक्तिपदं लुप्यते ककारतकारयोरुभयतः संक्रमात् । संक्रमे च "पूर्णनिदानयुक्" इत्येकं पदं "तिरयतीति" द्वितीयं तयोः पूर्णतया विभजनम् ॥ ७ ॥

प्रकारेणामुना शब्दालङ्कारेषु प्रथमं यमकालङ्कारं निर्दिश्य पदैरक्षरैर्वा तदनुकृतिकल्पमनुप्रासमाह—

## शेषस्सरूपोऽनुप्रासः ॥ ८ ॥

स्थाननियमाभावे सत्येकार्थमनेकार्थं पदमक्षरं वाऽनुप्रास इति सूत्रार्थः । सरूप इत्यनेन यमकसादृश्यं ध्वन्यते । यमकलक्षणातिरिक्तं यमकेन समानरूपञ्च यत्किमपि पदजातमक्षरजातं वा तत्सूत्रगतशेषशब्देन स्वीक्रियते । तस्मादयमपि यमकवदेव कर्णरसायनमिति भावः । यथा—

"सरस्वति ! कथं स्तवं रचयितुं तवाहं प्रभुः
प्रभूतमसकृद् यतोऽसि निगमैस्सुगीतस्तवा ।
तवाङ्घ्रियुगलारविन्दमकरन्दवृन्दं सदा
सदानतसुरैर्मुदा रसयितुं मिलिन्दायितम् ॥"
( दयानन्ददिग्विजयमहाकाव्ये स० ११ श्लो० ३५ )

अत्र स्तवा-तवा-सदा-सदा-मुदा-मिलिन्दा इत्यादिषु स्वरयोरेकरूपतया स्वरानुप्रासत्वं परिलक्ष्यते स्फुटम् ॥ ८ ॥

साम्प्रतं वर्णानुप्रासं वर्णयति—

## अनुल्बणो वर्णानुप्रासः श्रेयान् ॥ ९ ॥

वर्णानुप्रासो द्विधा उल्बणोऽनुल्बणश्च । तत्रानुल्बणोऽनुद्धतो यो वर्णानुप्रासः स श्रेयान् । उल्बणस्तु नेति सूत्रार्थः । उदाहरणं यथा—

"उपत्यकासस्यवसुन्धराधरां शिवाजिवाजिव्रजराजितां जिताम् ।
न तां नतां भूमिभृतां वरैर्वरः स तां हितान्तां नगरीं गरीयसीम् ॥"
॥ ९ ॥

## पादानुप्रासः पादयमकवत् ॥ १० ॥

प्रयुज्यतामिति सूत्रशेषः । पादयमकवदित्यनेन ये ये पादयमकभेदास्त एवास्यापीति ध्वन्यते । तत्र पादादिमध्यान्तानुप्रासो यथा—

"दयानन्दो दयाऽऽवेशादलं कृत्वा जने दयाम् ।
बलं ददावलं लोके नैगमं विनमद् बलम् ॥"
[ कविवरोऽखिलानन्दः ] ।

पादानुप्रासस्य पादयमकवद् भेदानामुदाहरणानि यथा पण्डितवरवामनः—

"कविराजमविज्ञाय कुतः काव्यक्रियाऽऽदरः ।
कविराजं च विज्ञाय कुतः काव्यक्रियादरः ॥"
"आखण्डयन्ति मुहुरामलकीफलानि ।
बालानि बालकपिलोचनपिङ्गलानि ॥"

वस्त्रायन्ते नदीनां सितकुसुमधराः श्रीशसंकाश ! काशाः
काशाभा भान्ति तासां नवपुलिनगताः श्रीनदीहंस ! हंसाः ।
हंसाभाम्भोदमुक्तः स्फुरदमलरुचिर्मेदिनीचन्द्र ! चन्द्र-
श्चन्द्राङ्कः शारदस्ते जयकृदुपनतो विद्विषां काल ! कालः ॥"

एवमन्येऽपि भेदा द्रष्टव्याः काव्यमालासु ॥ १० ॥

इति श्रीमन्मुनिमेधाव्रताचार्यकविरत्नविरचितायां व्रतिमङ्गलायां
यास्कीयकाव्यालङ्कारसूत्रवृत्तौ शब्दालङ्कारविवेचनं
नाम अष्टमोऽध्यायः ॥ ८ ॥

---

# अथ नवमोऽध्यायः ॥

निदर्शितौ पूर्वस्मिन्नध्याये यथायथं यमकानुप्रासौ शब्दालङ्कारौ । साम्प्रतमर्थालङ्कारनिरूपणं क्रियते सूत्रकारेण । तत्र—

## उपमानोपमेययोर्गुणलेशतः साम्यमुपमा ॥ १ ॥

उत्कृष्टगुणवता येन पदार्थेन सह हीनगुणं किमपि वस्तु गुणलेशत उपमीयते सादृश्यमानीयते तदुपमानम् । हीनगुणं यच्च किमपि वस्तु गुणलेशतः सादृश्यमुपयाति तदुपमेयम् । उपमानोपमेययोर्गुणलेशतो यत्सादृश्यं सैवोपमेति भावः । यथा—

इति करुणदशामवेक्ष्य भूमे-र्दुरिततमोदलनाय दिव्यधामा ।
भुवनहितकरः प्रकाशितोऽयं-रविरिव विश्वसृजा व्रती महर्षिः ॥"

( दयानन्ददिग्विजये स० २ श्लो० ४६ )

अत्र चेतनत्वदिव्यधामत्वव्रतित्वाद्यनेकगुणवता महर्षिणा दयानन्देन सह दिव्यधामवत्त्वचैतन्यरूपगुणलेशतो रवेः साम्यं सैवोपमा ॥ १ । सा चेयम्—

## गुणबाहुल्यतश्च कल्पिता ॥ २ ॥

गुणानां बाहुल्यं गुणबाहुल्यं तस्मादेषा कविभिः कल्पिता । कविभिः कल्पितत्वादस्याः कल्पितत्वम् । पृथक्पृथगवस्थिताः सर्वे गुणा एकत्रैवागत्य निवसन्त्विति मनीषया मनीषिभिरेषा निरदिश्यत ॥ २ ॥

गुणबाहुल्यस्योत्कर्षापकर्षाभ्यां कल्पिता यथा—

"असुन्धराऽथ डेमीति निर्झरिण्यौ यदङ्गणे ।
सेविके इव शोभेते जनसेवाकृतव्रते ॥"

( दयानन्ददिग्विजये स० ३ श्लो० २ )

साम्प्रतं तां विभजते—

## तद् द्वैविध्यं पदवाक्यार्थवृत्तिभेदात् ॥ ३ ॥

तस्या उपमाया द्वैविध्यं वेदितव्यम् । पदवाक्यार्थवृत्तिभेदात् । पदार्थवृत्तेर्वाक्यार्थवृत्तेश्च द्वैविध्यात् । तत्राद्या पदार्थोपमा द्वितीया वाक्यार्थोपमा । पदार्थोपमा यथा—

"अधर्मनाशव्रतिमौक्तिकैर्व्रतिन् !
विगुम्फितायां स्रजि नायकायसे ।
त्वमद्य दीनार्तितपःशमक्रिया—
विधौ विधिज्ञेन्द्र ! बलाहकायसे ॥"

( प्रकृतिसौन्दर्ये श्रं० ६—१२ )

वाक्यार्थोपमा यथा—

"हिमोत्तमाङ्गं स्थविराद्रिभर्तु—
र्बभौ महर्षेरिव शुक्लशीर्षम् ।
अनन्तकालादवहद्यतः श्री—
ज्ञानाम्बुगङ्गा विमलार्यलोके ॥"

( दयानन्ददिग्विजये स० ८ श्लो० ७८ )

साम्प्रतं द्विविधायाः पुनर्द्वैविध्यमभिधत्ते—

## सा पूर्णा लुप्ता च ॥ ४ ॥

सा पूर्वं निगदिता पदार्थोपमा वाक्यार्थोपमा च पुनर्द्विधा विज्ञायताम् पूर्णा लुप्ता च । तत्राद्या पूर्णोपमा द्वितीया लुप्तोपमा ॥ ४ ॥

तत्र पूर्णोपमां लक्षयति—

## गुणद्योतकोपमानोपमेयशब्दानां सामग्र्ये पूर्णा ॥५॥

गुणद्योतका ये उपमानवाचका उपमेयवाचकाश्च शब्दा इवादयस्तेषां समग्रतायां साकल्ये या किलोपमा सा पूर्णोपमा विज्ञेया । यथा—

"दयानन्दमुनेः कीर्त्तिश्चन्द्रिकेव मनोरमा ।
द्विजेन्द्रस्य जगद्व्योम्नि व्यानशे विमलाऽखिले ॥" ५ ॥
( दयानन्ददिग्विजये स० १३ श्लो० ६ )

## लोपे लुप्ता ॥ ६ ॥

गुणद्योतकानामुपमानोपमेयवाचिनामिवादिशब्दानां लोपे योपमा सा लुप्तोपमा । गुणशब्दलोपे यथा—'चन्द्र इव चन्द्रगुप्तो नृपः' इति । द्योतकशब्दलोपे यथा 'घनश्यामः कृष्णः' इति उभयलोपे यथा "चन्द्रवदनः" इति । उपमानोपमेयलोपस्तूपमा पञ्चे विलोकनीयः ॥ ६ ॥

## स्तुतिनिन्दातत्त्वाख्यानेषु ॥ ७ ॥

इयमुपमा प्रयोक्तव्येति शेषः । स्तुतौ निन्दायां तत्त्वाख्याने चास्याः प्रयोगः । स्तुतिनिन्दयोर्यथा—

"स्निग्धं भवत्यमृतकल्पमहो सुमित्रं
हालाहलं विषमिवापगुणं तदेव ।" इति ।

तत्त्वाख्याने यथा—

'सप्तर्षिमण्डलं विद्धि ज्योतिषामुत्तराहि तत् ।
ध्रुवं शकटतुल्यं यच्छ्रितं भ्रमति यन्त्रवत् ॥' इति ।

## हीनत्वाधिकत्वलिङ्गवचनभेदासादृश्यासम्भवास्तद्दोषाः ॥ ८ ॥

तस्या उपमाया दोषा भवन्ति-हीनत्वमधिकत्वं लिङ्गभेदो वचनभेदोऽसादृश्यमसम्भव इति ॥ ८ ॥

तान् क्रमेण व्याख्यातुमारभते—

## जातिप्रमाणधर्मन्यूनतोपमानस्य हीनत्वम् ॥ ९ ॥

जात्या प्रमाणेन धर्मेण चोपमानस्य न्यूनता या तद्धीनत्वमिति । जातिन्यूनत्वरूपं हीनत्वं यथा—

"चण्डालैरिव युष्माभिः साहसं बलवत्कृतम् ।"

प्रमाणन्यूनत्वरूपं हीनत्वं यथा

"खद्योतकीट इव भाति विभाकरोऽयम्"

उपमेयादुपमानस्य धर्मतो न्यूनत्वं यत्तद्धर्मस्य न्यूनत्वं तद्रूपं हीनत्वं यथा—

"स बद्धभूषितो मौञ्ज्या कृष्णाजिनपटं वहन्।
रोचते नीलजीमूतभागाश्लिष्ट इवांशुमान्॥"

अत्र मौञ्जी प्रतिवस्तु तडिन्नास्त्युपमान इति हीनत्वम्। न च कृष्णाजिनपटमात्रस्योपमेयत्वं युक्तम्? मौञ्ज्या व्यर्थत्वप्रसङ्गात्। ननु नीलजीमूतग्रहणेनैव तडित् प्रतिपद्यते? तन्न, व्यभिचारात्। अव्यभिचारे सम्भवन्ती प्रतिपत्तिः केन वार्यते? सर्वापीयं हीनोपमा॥ ९॥

साम्प्रतमधिकोपमामाह—

## ऐकान्त्यात्तेनाधिकत्वं व्याख्यातम्॥ १०॥

अवश्यमित्यर्थे एकान्तशब्दस्तस्य भाव ऐकान्त्यं तस्मादैकान्त्यादवश्यंभावित्वादिति भावः। तेन न्यूनत्वेन साहचर्यादधिकत्वं व्याख्यातमिति सूत्रार्थः। एतावता जात्या प्रमाणेन धर्मेण च यदुपमानस्याधिक्यं तदधिकोपममिति निष्कृष्टोऽर्थः। तत्र जातिगतमाधिक्यं यथा—मनुष्यवृत्तयोः। प्रमाणगतमाधिक्यं यथा—समुद्रकूपयोः। धर्मगतमाधिक्यं यथा—सूर्यचन्द्रयोः। सर्वमपीदमधिकोपमम्॥ १०॥ तत्र—

## धर्मयोरेकनिर्देशेऽन्यस्य संवित् साहचर्यात्॥ ११॥

धर्मगतहीनाधिकोपमाविषयकं सूत्रमेतत्। अत्र चाद्यो हीनोपमागतो धर्मः परश्चाधिकोपमागत इति धर्मद्वयम्। धर्मद्वयवतोः पदार्थयोर्मध्ये प्रसङ्गादेकस्य निर्देशेऽन्यस्यापि संवित्प्रतिपत्तिः कर्त्तव्या कुत इति चेत्साहचर्यात्। साहचर्यं च हीनत्वस्याधिकत्वेन समं तस्य च हीनत्वेन॥ ११॥

इदानीं लिङ्गभेदं लक्षयति—

## उपमानोपमेययोर्लिङ्गव्यत्यासो लिङ्गभेदः ॥ १२ ॥

उपमानस्योपमेयस्य च यः परस्परं लिङ्गविपर्ययः स लिङ्गभेद इति कथ्यते। यथा पुँल्लिङ्गोपमानस्य स्त्रीलिङ्गोपमेयेन सहैक्यम्। यद्वा स्त्रीलिङ्गोपमानस्य पुँल्लिङ्गोपमेयेन सहैक्यम् ॥ १२ ॥ परन्तु—

## इष्टः पुंनपुंसकयोः प्रायेण ॥ १३ ॥

पुंनपुंसकलिङ्गवतोरुपमानोपमेययोर्यः परस्परं लिङ्गभेदः स तु प्रायेण बाहुल्येनेष्टः। अभिमत इत्यर्थः ॥ १३ ॥

स चायम्—

## लौकिक्यां समासाभिहितायामुपमाप्रपञ्चे च ॥ १४ ॥

पुंनपुंसकलिङ्गयोरुपमानोपमेययोर्यः परस्परं लिङ्गभेदः स लोकगतोपमायां समासगतोपमायामुपमाप्रपञ्चे च कर्त्तव्यो नेतरत्र। उपमाप्रपञ्चोऽग्रे दशमाध्याये वक्ष्यते ॥ १४ ॥

## तेन वचनभेदो व्याख्यातः ॥ १५ ॥

उपमानस्योपमेयस्य च यः परस्परं वचनभेदः सोऽपि लिङ्गभेदवन्न कर्त्तव्यः। वचनशब्देनात्रैकवचनद्विवचनबहुवचनानां ग्रहणं न संख्यायाः। यथैकवचनवत उपमानस्य द्विवचनवतोपमेयेन सहैक्यम् ॥ १५ ॥

साम्प्रतमसादृश्यं पञ्चमदोषमाह—

## अप्रतीतगुणसादृश्यमसादृश्यम् ॥ १६ ॥

अप्रतीतैरसम्भवैर्गुणैः सह यत्सादृश्यं तदसादृश्यमिति निगद्यते। यथा—मूर्खपण्डितयोः ॥ १६ ॥

साम्प्रतमसादृश्ये उपमा नश्यतीत्याह—

## असादृश्यहता ह्युपमा तन्निष्ठाश्च कवयः ॥ १७ ॥

गुणलेशेनाप्यसदृशे वस्तुनि प्रयुक्ता उपमा हता भवति नश्यतीत्यर्थः। उपमायां नष्टायामुपमाप्रधानाः कवयोऽपि नश्यन्ति। तस्मादसादृश्ये कदाप्युपमा न प्रयोक्तव्या ॥ १७ ॥

मतान्तरमत्राह—

## उपमानाधिक्यात्तदपोह इत्येके ॥ १८ ॥

असादृश्येऽपि प्रयुक्तायामुपमायां यद्युपमेयादुपमानस्याधिक्यं स्यात्तदा तस्य प्रागुक्तस्यासादृश्यस्यापोहो निरासः सम्भवतीति खल्वेके वदन्ति भरताद्याः । यथा—"कुन्देन्दुहारधवलं विततं यशस्ते ।" इत्यत्र कुन्दादिभिरुपमानैर्बहुभिर्यशसः सादृश्यं सुस्थापितं भवति, तेषां शुक्लगुणातिरेकात् ॥ १८ ॥



इदानीमेतन्मतमन्येषां निरस्यति—

## न, अपुष्टार्थत्वात् ॥ १९ ॥

उपमानाधिक्यात्तदपोह इति यदुक्तं तन्न समीचीनं कुत इति चेदपुष्टार्थत्वात् । न ह्येकस्मिन्नुपमाने प्रयुक्ते सत्युपमानान्तरप्रयोगः कमप्यर्थविशेषं पुष्णाति तस्माद् व्यर्थमसादृश्ये उपमायाः करणम् ॥ १९ ॥

साम्प्रतमुपमायाः षष्ठं दोषं कथयति—

## अनुपपत्तिरसम्भवः ॥ २० ॥

उपमानस्यानुपपत्तिरप्राप्तिरसम्भव इति कथ्यते । यथा गगनदिशोः । गगनं किमिवेति वक्तुं न शक्यते दिशश्चाप्येवम् । तस्मादेवंविधस्थलेऽप्युपमा न प्रयोक्तव्या ॥ २० ॥

अन्यदप्याह—

## न विरुद्धोऽतिशयः ॥ २१ ॥

उपमालङ्कारे प्रसङ्गविरुद्धोऽप्यतिशयो न प्रयोक्तव्य इति भावः । अतिशय आधिक्यम् । प्रसङ्गानुकूलस्तु प्रयोक्तव्य एवेति ध्वन्यते ॥ २१ ॥

तानेतान् षडुपमादोषान् ज्ञात्वा कविः परिहरेत् ॥

इति श्रीमन्मुनिमेधाव्रताचार्यकविरत्नविरचितायां व्रतिमङ्गलायां यास्कीयकाव्यालङ्कारसूत्रवृत्तौ उपमालङ्कारनिरूपणं नाम नवमोऽध्यायः ॥ ९ ॥

---

# अथ दशमोऽध्यायः ॥

व्याख्याता पूर्वस्मिन्नध्याये यथायथमुपमा निदर्शिताश्च तस्याः षड्दोषाः। साम्प्रतमुपमालङ्कारा विविच्यन्ते। तत्र—

**प्रतिवस्तुप्रभृतिरुपमाप्रपञ्चः ॥ १ ॥**

प्रतिवस्तुप्रभृतिर्यावानलङ्कारवर्गः स सर्वोऽपि उपमाया एव प्रपञ्चो वेदितव्यः। प्रपञ्चो विस्तरः ॥ १ ॥

तत्र तावद् वाक्यार्थोपमायाः प्रतिवस्तुनो भेदमाख्यातुं तल्लक्षणं ब्रवीति—

**उपमेयस्योक्तौ समानवस्तुन्यासः प्रतिवस्तु ॥ २ ॥**

उपमेयस्य वाक्यस्योक्तौ सत्यां यत्र तदग्रे समानवस्तुविन्यासो विधीयते स प्रतिवस्त्वलङ्कार उच्यते। यथा—श्रीमदप्पयदीक्षितप्रणीते कुवलयानन्दे—

"वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता।
तापेन भ्राजते सूरः शूरश्चापेन राजते ॥ ५१ ॥"

यथा वा—दयानन्दस्य सद्वृत्तं दुष्टवाचा न बाधितम्।
दिनेन्द्रस्य हि तत्तेजस्तिमिरेण न नाशितम् ॥

यथात्रैव भ्राजते राजत इत्येक एव धर्म उपमानोपमेयवाक्ययोः-पृथग्भिन्न-पदाभ्यां निर्दिष्टः। सद्वृत्तमुत्तमशीलम्। अत्र पूर्वार्धमुपमेयवाक्यमुत्तरार्ध-मुपमानवाक्यम्। उभयत्र च नाशाभावरूपः समानधर्मः शब्दभेदेनोपात्तः ॥ २ ॥

इदानीं प्रतिवस्तुनः समासोक्तेर्भेदं दर्शयति—

**अनुक्तौ समासोक्तिः ॥ ३ ॥**

उपमेयस्य वाक्यार्थस्यानुक्तौ यत्र तदग्रे सामान्यवस्तुविन्यासो विधीयते स समासोक्त्यलङ्कारो निगद्यते। समासेन संक्षेपेणोक्तिः समासोक्तिः।

उदाहरणं यथा—

"पूर्णश्च चन्द्रवलयं तमसा गृहीतं
जातस्तरुश्च फलदः करिणा च भग्नः ।
नौकाम्बुधौ च भरिता मरुता च शीर्णा
हा हन्त ! दुर्विलसितं फलितं विधेस्तत् ॥" ३ ॥

( पद्यतरङ्गिण्याम् )

साम्प्रतं समासोक्तेरप्रस्तुतप्रशंसाया भेदं कथयति—

## किञ्चिदुक्तावप्रस्तुतप्रशंसा ॥ ४ ॥

उपमेयस्य वाक्यार्थस्य किञ्चिल्लेशमात्रेणोक्तौ यत्र सामान्यवस्तुन्यासो विधीयते साऽप्रस्तुतप्रशंसा । अप्रस्तुतस्यार्थस्य प्रशंसनमप्रस्तुतप्रशंसा । यथा—

"एकः श्लाघ्यो मनुष्येषु योऽन्यमीशान्न याचते ।
सृष्टिसृजो निराकाराल्लोकपालयितुर्धनम् ॥ ४ ॥

साम्प्रतमप्रस्तुतप्रशंसाया अपह्नुतेर्भेदं लक्षयति—

## समेन वस्तुनाऽन्यापलापोऽपह्नुतिः ॥ ५ ॥

समेन तुल्येन वस्तुना यत्र वस्त्वन्तरमपह्नूयते गोप्यते सा खल्वपह्नुतिनामालङ्कारः । अपलापस्तु निह्नवः । अपह्नूयते गोप्यतेऽर्थोऽनयेत्यपह्नुतिः । यथा—

"श्रीझज्जरे गुरुकुलं यदिदं विभाति
नैतद् बटो ! गुरुकुलं परमार्षशैल्याः ।
लीलालयं परममण्डनमात्मसिद्धेः
संस्काररत्ननिधिपं व्रतदिव्यधाम ॥"

अत्र नेदं गुरुकुलं किन्तु—आर्षशैल्या लीलागृहमात्मनः सिद्धेरुत्तमालङ्करणं संस्काररत्ननिधिरक्षकं ब्रह्मचर्यादिव्रतानामलौकिकं मन्दिरमिति वर्णनादपह्नुतिरलङ्कारश्चकास्ति ॥ ५ ॥

इदानीमपह्नुतेः सकाशाद् रूपकस्य भेदं वर्णयति—

## उपमानोपमेयस्य गुणसाम्यात्तत्त्वारोपो रूपकम् ॥ ६ ॥

उपमानगतस्योपमेयगतस्य च पदार्थस्य गुणसाम्याद्यत्र तत्त्वारोपोऽभेद इति यावद् विधीयते स रूपकालङ्कारः । निरूप्यतेऽर्थोऽस्मिन्निति रूपकम् ।

यथा मदीया समस्यापूर्त्तिरिह—

"प्रनष्टा मोहाख्या रजनिरजनि प्राज्ञभलयः
श्रिया हीनः काशीविबुधविधुरार्याब्जमहसत् ।
यदा ब्रह्मावर्तोदयगिरिमितो ब्राह्मरुचिरो
दयानन्दस्वामी श्रुतिगगनगामी दिनमणिः ॥"

अत्रोपमानेन दिनमणिना रविणोपमेयस्य दयानन्दस्वामिनो गुणसाम्यात्तत्त्वस्याभेदस्यारोपणमारोपो रूपकम् । उपमानोपमेययोरुभयोरपि ग्रहणं लौकिक्याः कल्पितायाश्चोपमायाः प्रकृतित्वमत्र यथा विज्ञायेतेति । यथा वा—

प्रमाणनिस्त्रिंशसुतर्कसायकैः
सभारणे तान् प्रतिपक्षिपण्डितान् ।
अधर्मवर्मावृतगात्रमण्डलान्
बिभेद यः शास्त्रिमहारथो भटान् ॥ ६ ॥

अधुना रूपकाच्छ्लेषस्य भेदं दर्शयितुमाह—

## सधर्मेषु तन्त्रप्रयोगे श्लेषः ॥ ७ ॥

समानधर्मेषु पदार्थेषु तन्त्रेणार्थप्रयोगे सति श्लेषालङ्कार इत्यामनन्ति । समानं तुल्यम् । तुल्यता च गुणक्रियाशब्दैरुपमानेन सममुपमेयस्य । द्वयोरर्थयोरेकपदेन कथनं तन्त्रम् । यथा—

"जडात्मचिन्नीरपयोर्विवेका
मुक्ताशनाः शुक्लसुवर्णपक्षाः ।
त्यक्ताम्बराः संयमिराजहंसा
रराजिरे यत्पुलिने गृणन्तः ॥"

( दयानन्ददिग्विजये स० १७ श्लो० ३ )

अत्रोपमेयानां संयमिनामुपमानै राजहंसैर्विहङ्गैः समं गुणक्रियाशब्दैस्तुल्यतावर्णनाद् द्वयोरर्थयोश्चैकपदेन कथनादयं श्लेषालङ्कारः स्फुटं प्रतीयते। यथा—मुक्ताशना इत्यत्र मुक्ता अश्नन्तीति मुक्ताशना हंसाः, मुक्तमशनं भोजनं यैस्ते मुक्ताशनाः संयमिनः । शुक्लसुवर्णपक्षा इत्यत्र शुक्लाः श्वेताः सुवर्णाः शोभनकान्तयः पक्षा येषां ते हंसाः । पक्षान्तरे—शुक्लाः पवित्राः शोभना ब्राह्मणादयो वर्णाः पक्षे येषां ते संयमिनः । त्यक्ताम्बरा इत्यत्र चापि त्यक्तमम्बरं गगनं वस्त्रं च यैस्ते हंसाः संयमिनश्चेति तन्त्रेणैकपदेन कथनं श्लेष इति भावः । यथा वा कुवलयानन्दे—

"असावुदयमारूढः कान्तिमान् रक्तमण्डलः ।
राजा हरति लोकस्य हृदयं मृदुलैः करैः ।"

अत्र चन्द्रवर्णनप्रस्तावे प्रकृतस्य नवोदितचन्द्रस्याप्रकृतस्य प्रत्यग्राभिषिक्तस्य नृपतेः श्लेषः । असाविति । उदयं शैलमभ्युदयं च, रक्तं शोणवर्णमनुरक्तं च, मण्डलं बिम्बं राष्ट्रं च, राजा चन्द्रो नृपश्च, मृदुलैरभिनवैरल्पैश्च, करैः किरणैर्ग्राह्यधनैश्च ॥ ७ ॥

साम्प्रतं श्लेषाद् वक्रोक्तेर्भेदं निगदति—

## साद्दृश्याल्लक्षणा वक्रोक्तिः ॥ ८ ॥

बहुषु वस्तुषु सादृश्याद्यत्र लक्षणया कश्चिदर्थो निरूप्यते सा वक्रोक्तिः । वक्रा कुटिला उक्तिर्यस्यां सा वक्रोक्तिः । कुटिलत्वं च श्लेषकाकुभ्यामपरार्थप्रकल्पनम् । काकुर्ध्वनेर्विकारः ॥ यथा—

निष्पक्षपण्डितस्येदं सत्योक्तं युगपन्नृणाम् ।
एकेषां हृदि पीयूषमन्येषां विषमाजनि ॥"

( दयानन्ददिग्विजये स० १४ श्लो० ४२ )

अत्र विवेकाविवेकशक्ती सादृश्यात्सज्जनदुर्जनयोर्हृदयस्य हर्षं शोकं च लक्षयतः ।। यथा वा—

विकसितं दरमम्बुरुहं ततो
मुकुलितार्द्धमियं कुमुदावली ।
गमितमेकमिदं विधिनोदयं
विलयमन्यदहो लसितं विधेः ।।
( प्रकृतिसौन्दर्ये अं० ४ श्लो० २ )

अत्र नेत्रधर्मौ-उन्मीलननिमीलने कमलकुमुदयोर्विकसितमुकुलिताभ्यामनुमीयेते सादृश्यतो लक्षणयेति वक्रोक्तिभेदः ।।
यथा वा कविरखिलानन्दः—

"वेदमार्गपरिरक्षणदक्षे सन्मुनौ समुदयं प्रतियाते ।
उन्मिमील हृदयाब्जमकस्मात् तत्सतां नु निमिमील शठानाम् ।।"

अत्रापि नेत्रधर्मौ-उन्मीलननिमीलने सादृश्यात्सज्जनदुर्जनयोर्हृदयकमलस्य विकाशं संकोचं च लक्षयतः । मुनिर्दयानन्दः, शेषं सुगमम् ।।८।।
साम्प्रतं वक्रोक्तेरुत्प्रेक्षाया भेदं कथयति—

**अतद्रूपस्यान्यथाऽध्यवसानमतिशयार्थमुत्प्रेक्षा ।। ९ ।।**

अतद्रूपस्यातत्स्वभावस्यान्यथा तत्स्वभावतया यदतिशयार्थं भ्रान्तिज्ञाननिवृत्त्यर्थमध्यवसानं कल्पनं सोत्प्रेक्षा । उत्कर्षेणार्थः प्रेक्ष्यते यस्यां सा उत्प्रेक्षा । सा च मन्ये शङ्के ध्रुवं प्रायो नूनमित्यादिशब्दैर्व्यज्यते । नात्राध्यारोपो लक्षणा वाऽध्यवसानशब्देन जरीगृह्यते किन्तु विलक्षणा लोकोत्तरा वा कल्पनैव ।। यथा—

'भूयोऽपि भूत्वा वटुरेष नूनं श्रीशङ्कराचार्य इहागतो नु ? ।
आम्नायधर्मोद्धरणाय लोकैरित्यन्वमानि व्रतिनं विलोक्य ।।
( दयानन्ददिग्विजये स० ४ श्लो० १४ )

अत्र ब्रह्मचारी मूलशङ्करः कृतोपनयनसंस्कारो वेदधर्मोद्धाराय पुनर्जनिं प्राप्तः सोऽयं श्रीशङ्कराचार्यो बालरूपेणागत इत्युत्प्रेक्षितोऽस्ति। नूनं शब्देन चोत्प्रेक्षा व्यज्यते ॥ ६ ॥

साम्प्रतमुत्प्रेक्षाया अतिशयोक्तेर्भेदमाह—

## लोके सम्भाव्यधर्मस्य तदुत्कर्षकल्पनाऽतिशयोक्तिः ॥ १० ॥

लोके जगति सम्भाव्यधर्मस्य विद्यमानवस्तुस्वभावस्य, या तदुत्कर्षार्थं विद्यमानवस्तुस्वभावोत्कर्षार्थमिति यावत् कल्पना सातिशयोक्तिः। अतिशयिताऽत्यन्तमुत्कृष्टा उक्तिरतिशयोक्तिः। यथा—

"गृहे गृहे चैत्ररथं पदे पदे मनोहरं नन्दनमत्र पुष्पकम्।
सुवैजयन्ता धनदालयाः पथे पथे विरेजुः सुरयक्षभूभुजाम् ॥"

( दयानन्ददिग्विजये स० २१ श्लो० १४ )

अत्र [ बम्बईनाम्न्या मुम्बापुर्याः ] मोहमय्या महानगर्याः सम्भाव्यधर्मस्योत्कर्षार्थं यद् वर्णनमकारि सा अतिशयोक्तिरिति कथ्यते। यथा वा—

"सहस्रशस्स्युः प्रतिभाप्रभाञ्चिता वसुन्धरायां यदि सत्कवीश्वराः।
गुणावलीं वर्णयितुं न ते क्षमायतेर्दयानन्दसरस्वतीपतेः ॥

स्पष्टमतिशयोक्तिः ॥ १० ॥

साम्प्रतमतिशयोक्तेः सन्देहस्य भेदमाह—

## उपमानोपमेयसंशयः सन्देहः ॥ ११ ॥

उपमानस्योपमेयस्य च मध्ये कस्यातिशयो विधेय इति यत्र सन्दिह्यते स सन्देहालङ्कारः। यथा—

किं सत्यरूपो भगवान् गिरीशो विश्वम्भरः शङ्कर एष साक्षात्।
आहोस्विदेषा प्रतिमा तदीया संराजते नात्र विनिश्चयो मे ॥

( दयानन्ददिग्विजये स० ४ श्लो० ६२ )

स्पष्टमत्र सन्देहालङ्कारः ॥ ११ ॥

इदानीं सन्देहाद् विरोधस्य भेदं वर्णयति—

## विरुद्धाभासत्वं विरोधः ॥ १२ ॥

विरुद्धतया यत्रार्थस्याभासः प्रतिबिम्बो वर्ण्यते स विरोधालङ्कारः। विरुद्धतया प्रतीयतेऽर्थोऽस्मिन्निति विरोधः। उदाहरणं यथा—

सावित्र्यां परमेष्ठीव श्रियां विष्णुरिवानिशम्।
उमायां शम्भुवद् रक्तोऽप्यासीद् यो व्रतिनां वरः॥"

(दयानन्ददिग्विजये स० १३ श्लो० २२)

अत्र सावित्र्यां श्रियामुमायाञ्च रक्तोऽप्यासीद् दयानन्दो व्रतिनां वरः श्रेष्ठब्रह्मचारी, इति विरोधः प्रतीयते आभासते तत्परिहारस्त्वेवं विधीयते— सावित्री गायत्री तस्यां रक्तो निरतः, श्रीः कान्तिः शारीरं तेजस्तद् वर्धने रक्त आसक्तस्तत्पर इति यावत्, उमा ब्रह्मविद्या बुद्धिर्वा तस्यां रक्तो निलीनो दयानन्दो व्रतिनां वरः श्रेष्ठब्रह्मचारी स आसीदिति भावः। सोऽयं विरोधालङ्कारः॥ १२॥

साम्प्रतं विरोधाद् विभावनाया भेदं कथयति—

## क्रियाप्रतिषेधे प्रसिद्धतत्फलव्यक्तिर्विभावना ॥१३॥

क्रियायाः प्रतिषेधेऽभावे सति क्रियाजन्यप्रसिद्धफलस्य व्यक्तिरवाप्ति-र्विभावना। एतावता कारणं विना कार्योत्पत्तिर्विभावनेति फलितम्। विभाव्यतेऽर्थोऽस्यामिति विभावना। यथा—

चित्रं तपति राजेन्द्र प्रतापतपनस्तव।
अनातपत्रमुत्सृज्य सातपत्रं द्विषद्गणम्॥ ७९॥

(कुवलयानन्दे पृ० १००)

आतपत्रं छत्रं तद्रहितमनातपत्रम्। आतपत्रेण सहितं सातपत्रम्। अत्र सत्यपि प्रतिबन्धे कार्योत्पत्तिः। सातपत्रमेव तपनस्तपतीति चित्रम्। विरुद्धात्कार्यसम्पत्तिरपि दृश्यते। यथा—

उदितेऽपि कुमारसूर्ये कुवलयमुल्लसति भाति नक्षत्रम्।
मुकुलीभवन्ति चित्रं परराजकुमारपाणिपद्मानि॥ ८१॥

अत्र कस्यचिद् राजकुमारस्य प्रतापवर्णनम्। कुमाररूपे सूर्ये-उदिते सति कोः पृथिव्यावलयं सण्डलमेव कुवलयं कुमुदमुल्लासं प्राप्नोति। क्षत्रं क्षत्रिय-कुलं न भाति, अथ च नक्षत्रं भातीति चित्रम्। उदिते सूर्ये कुमुदमुल्लसति, नक्षत्रं भाति, पद्मानि मुकुलीभवन्ति संकुचन्तीति विरुद्धात्फलसम्पत्तिर्जातेति विभावनालङ्कारः ॥ १३ ॥

साम्प्रतं विभावनाया अनन्वयस्य भेदं निगदति—

## एकस्योपमेयत्वोपमानत्वेऽनन्वयः ॥ १४ ॥

यत्रैकस्यैवार्थस्योपमेयत्वमुपमानत्वञ्चारोप्यते तत्रानन्वयाऽलङ्कारः। न विद्यतेऽन्यस्यान्वयोऽस्मिन्नित्यनन्वयः। यथा—

'श्रेयसे मानवानां यो मोक्षानन्दं जहौ मुदा।
दयानन्द इवौदार्ये दयानन्दः स आ बभौ ॥

( दयानन्ददिग्विजये स० १३ श्लो० १० )

अत्र दयानन्दो दयानन्द इवेत्यनन्यसादृश्यमेतेन प्रतिपाद्यते ॥ १४ ॥

इदानीमनन्वयादुपमेयोपमाया भेदं दर्शयति—

## क्रमेणोपमेयोपमा ॥ १५ ॥

यत्रैकस्यैवार्थस्योपमेयत्वमुपमानत्वञ्च क्रमेणोपलभ्येत तत्रोपमेयोपमा-लङ्कारः। उपमेयस्यैवोपमा उपमेयोपमा। उदाहरणं यथा—

धर्मो ज्ञानमिवोत्कृष्टो ज्ञानं धर्म इवातुलम्।
सरस्वतीश्वरे ह्येते सोदर्ये इव रेजतुः ॥

( दयानन्ददिग्विजये स० १३ श्लो० ११ )

अत्र धर्मो ज्ञानमिव ज्ञानं धर्म इवेति यदुपमेयं तदेवोपमानम् ॥ १५ ॥

साम्प्रतमुपमेयोपमायाः परिवृत्तेर्भेदं निरूपयति—

## समविसदृशाभ्यां परिवर्तनं परिवृत्तिः ॥ १६ ॥

यत्र समविसदृशाभ्यां तुल्यविषमाभ्यामर्थाभ्यामर्थान्तरस्य परिवर्तनं विधीयते सा परिवृत्तिः। परिवर्तते विपर्यासमेत्यर्थो यस्यां साऽन्वर्था परिवृत्तिः। यथा—

आत्मानन्दयतीन्द्रेण मुक्तिमार्गमुपेयुषा ।
जीर्णदेहेन तत्क्रीतं भुवि चन्द्रोज्ज्वलं यशः ॥

अत्र श्रीमदात्मानन्दयतीन्द्रेण जीर्णदेहं दत्त्वा भुवि चन्द्रधवलं यशः क्रीतमिति पदार्थविनिमयेन चन्द्रधवला कीर्त्तिरुपादत्तेति परिवृत्तिरलङ्कारः ॥ १६ ॥

अधुना परिवृत्ते सकाशात्क्रमस्य भेदं वर्णयति—

## उपमेयोपमानां क्रमसम्बन्धः क्रमः ॥ १७ ॥

यत्रोपमेयानामुपमानानां च क्रमेण यथासंख्यं सम्बन्धो विधीयते स क्रमालङ्कारः । यथा—

"कामं क्रोधमरातिलोभमथकृन्मोहं मदञ्चानघो
मात्सर्यञ्च जितेन्द्रियत्वबलतः क्षान्त्या च वैराग्यतः ।
ज्ञानेनार्ययतीश्वरो विनयतः सौजन्यशीलेन च
जित्वा लोकहितं ततान सततं श्रीमान् दयानन्दवान् ॥"

अत्रार्ययतीश्वरो दयानन्दो जितेन्द्रियत्वक्षान्तिवैराग्यज्ञानविनयसौजन्यशीलैः क्रमेण षट्सपत्नान् कामक्रोधलोभमोहमदमात्सर्यरूपान् विजित्य सदा लोककल्याणं चक्रे । इति क्रमालङ्कारश्चकास्ति ॥ १७ ॥

साम्प्रतं क्रमाद् दीपकस्य भेदं दर्शयति—

## अनुषङ्गत उपमानोपमेयवाक्येष्वेका क्रिया दीपकम् ॥ १८ ॥

यत्रोपमानवाक्येषूपमेयवाक्येषु चानुषङ्गतः स्वभावत एका क्रिया प्रयुज्यते तद् दीपकम् ॥ १८ ॥

## तत् त्रिविधमादिमध्यान्तवाक्यवृत्तिभेदात् ॥ १९ ॥

तद् दीपकं त्रिविधमादिदीपकं मध्यदीपकमन्तदीपकञ्च । तत्र वाक्यादौ क्रियायाः प्रयोगे आदिदीपकम् । वाक्यमध्ये प्रयोगे मध्यदीपकम् । वाक्यान्ते प्रयोगेऽन्तदीपकम् । तत्रादिदीपकं यथा—

राजन्ते व्रतिनोऽभ्यासैर्गृहस्था धर्मपालनैः ।
मुनयस्तत्त्वचिन्ताभिर्यतयो हितसूक्तिभिः ॥

अत्र पद्यस्यादौ क्रियाया अवस्थानादादिदीपकम् । मध्यदीपकं यथा—

चित्तं सन्तोषशोभाभिर्वाणी मधुरवार्तया ।
आस्यं प्रसन्नतालक्ष्म्या चकास्ति हि महात्मनः ॥

इह पद्यमध्ये क्रियाप्रयोगान्मध्यदीपकम् । अन्तदीपकं यथा—

व्यायामेन वपुःकान्तिः शान्तिरौदार्यतो हृदः ।
कृषिर्निरीक्षणान्नित्यं मानवानां समेधते ॥

अत्र पद्यान्ते क्रियावस्थानादन्तदीपकम् ॥ १९ ॥

इदानीं दीपकान्निदर्शनस्य भेदमाह—

## क्रिययैव स्वगतार्थान्वयख्यापनं निदर्शनम् ॥ २० ॥

यत्र केवल क्रिययैव निजगतार्थस्य तथा निजसम्बन्धवत्पदगतार्थस्य च ख्यापनं विधीयते तन्निदर्शनम् । निदर्शयति क्रियैव स्वपरार्थौ यत्र तदन्वर्थं निदर्शनम् । यथा—

गिरिजागुरुमस्तके पदं विनिधाय द्विजराडयं यतः ।
गगनं गतवान् मदान्वितः पतति क्षीणपदोऽधुनोच्चकैः ॥
( प्रकृतिसौन्दर्ये अं० ४ श्लो० ३ )

अत्र पततीति बोधयन्निति वक्तव्ये बोधयन्नित्यस्य गम्यमानत्वादप्रयोगः । अत्र द्विजराट् चन्द्रमा मदान्वितो गिरिजागुरुमस्तके पदं विनिधाय उच्चैः पदमारूढवानिति पदभ्रष्टोऽधुना पतति । अन्योऽप्येवं यो गुरुमवमत्याना-दृत्याभिमानवशादुच्चपदमारोहति स गुरोरवमन्ता द्विजानां राजा भवन्नपि नियतं पदच्युतस्सन् पतति विनाशं प्राप्नोत्यनिष्टपर्यवसायिनमर्थं बोधयन्नेव स पततीत्यर्थनिबन्धनादसदर्थनिदर्शनालङ्कारः ।

अथ सदर्थनिदर्शनं यथा कुवलयानन्दे—

चूडामणिपदे धत्ते यो देवं रविमागतम् ।
सतां कार्यातिथेयीति बोधयन् गृहमेधिनः ॥

अत्र समागतं रविं शिरसा सम्भावयन्नुदयाचलः स्वनिष्ठया रविधारण-क्रियया समागतानां सतामेवं गृहमेधिभिरातिथ्यं कार्यमिति सदर्थं बोधयन्निबद्ध इति सदर्थनिदर्शनम् ॥ २० ॥

साम्प्रतं निदर्शनादर्थान्तरन्यासस्य भेदं ब्रवीति—

## उक्तसिद्ध्यै वस्तुनोऽर्थान्तरस्यैव न्यसनमर्थान्तरन्यासः ॥ २१ ॥

यत्रोक्तार्थसिद्ध्यै वस्तुनो वाक्यार्थान्तरस्यैव विन्यसनं क्रियते सोऽर्थान्तरन्यासः । अर्थान्तरं न्यस्यतेऽस्मिन्नित्यर्थान्तरन्यासः । यथा—

पौराणिकैर्यद्यपि पीडितोऽयं शनैः शनैर्वेदपथानुयायी ।
भूत्वा विनेयोऽजनि योगिराजः सत्याङ्कुरः क्व प्रलयं प्रयाति ॥

( दयानन्ददिग्विजये स० १७ श्लो० ४४ )

अत्र पौराणिको विद्वद्वरः श्रीहरिशङ्करः शास्त्रार्थे योगिना दयानन्देन पराजितस्सन् सत्यप्रियतया शिष्यत्वमङ्गीचकार यदा तदायं पौराणिकैः पीडितोऽपि वेदपथानुयायी समजायतेति पद्योक्तार्थसिद्ध्यै—"सत्याङ्कुरः क्व प्रलयं प्रयाती"त्यर्थान्तरन्यासो व्यधीयतेति विज्ञेयम् ॥ २१ ॥

इदानीमर्थान्तरन्यासाद् व्यतिरेकस्य भेदमुपदिशति—

## उपमेयस्य गुणातिरेकत्वं व्यतिरेकः ॥ २२ ॥

यत्रोपमानापेक्षयोपमेयस्य गुणाधिक्यं प्रतिपाद्यते स व्यतिरेकः । व्यतिरिच्यते उपमानगुणाधिक्यमत्रेति व्यतिरेकः । यथा—

दयानन्दयतीन्द्रोऽयं विबुधैः समतां गतः ।
यतीशैरितरैः किन्तु ते कलङ्कतयाङ्किताः ॥

अत्र दयानन्दस्य तदितरयतीशैः सह साम्यं विधायापि तेषु कलङ्कित्वमारोप्य दयानन्दगुणाधिक्यवर्णनाद् व्यतिरेकालङ्कारः । यथा वा—

यदन्तरं सिंहगजेन्द्रवृन्दयोर्यदन्तरं सूर्यमृगाङ्कबिम्बयोः ।
यदन्तरं वीन्द्रविहङ्गसंघयोस्तदन्तरं योगिबुधेन्द्रवर्गयोः ॥

स्वरादिसंख्यद्विजवर्ग एकतो यतिस्स शास्त्रार्थदिवि द्विजेश्वरः ।
तदन्यपक्षे शुशुभे शुभङ्करः किरन्त्सुधापूर्णगिरं मनोहराम् ॥
( दयानन्ददिग्विजये स० १८ श्लो० ५६—६० )

अत्रापि यतीन्द्रगुणाधिक्यनिरूपणाद् व्यतिरेकालङ्कारः ॥ २२ ॥

सम्प्रति व्यतिरेकाद् विशेषोक्तेर्भेदं कथयति—

## एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः ॥२३॥

एकगुणहानिकल्पनायां कृतायां सत्यां यदवशिष्टगुणैः सह साम्यं तस्य दार्ढ्यं विशेषोक्तिः । यथा—

गुणानां सन्निधिर्नूनं पाण्डुपुत्रो युधिष्ठिरः ।
केवलं दुर्गुणस्तस्य द्यूतकर्मणि यद्रतः ॥

अत्रैकगुणहानौ कल्पितायां तदितरसमग्रगुणानां युधिष्ठिरे निवेशदार्ढ्याद् विशेषोक्तिः ॥ २३ ॥

साम्प्रतं विशेषोक्तेर्व्याजस्तुतिभेदं व्याहरति—

## सम्भाव्यविशिष्टकर्माकरणान्निन्दास्तोत्रार्था व्याजस्तुतिः ॥ २४ ॥

सम्भाव्यस्य कर्तुं शक्यस्य विशिष्टकर्मणोऽकरणान्निन्दागर्भस्तुतिप्रयोजना व्याजस्तुतिः । अत्यन्तगुणाधिकं विशिष्टम् । यथा—

वेदप्रकाशो विहितोऽखिलेभ्य—स्ततं समत्वं मनुजेष्वमन्दम् ।
महर्षिणा नान्यबुधैर्मतस्थै—र्दर्पः कथं नु क्रियतां वृथैभिः ॥

अत्र महर्षिदयानन्द एतद्विशिष्टकर्मद्वयमकृत नान्यैर्मतान्तरस्थैर्बुधैरकारि । कथमेषां वृथा दर्प इति निन्दागर्भं दर्पकथनम् । यथा वा—

पण्डितवरवामन आह—

"बबन्ध सेतुं गिरिचक्रवालैर्बिभेद सप्तैकशरेण तालान् ।
एवं विधं कर्म ततान रामस्त्वया कृतं तन्न मुधैव गर्वः ॥" २४ ॥

साम्प्रतं व्याजस्तुतेर्व्याजोक्तिभेदं वर्णयति—

## व्याजस्य सत्यसारूप्यं व्याजोक्तिः ॥ २५ ॥

यत्र व्याजस्य छद्मनः सत्येन सह सारूप्यं निरूप्यते सा व्याजोक्तिः । व्याजः=छलम् । यथा—

स्नानेन गङ्गाम्बुनि ते विमुक्तिः
स्वपापसंक्षालनहेतुना द्राक् ।
लिङ्गार्चनेनापि शिवस्य बन्धो !
संसारबन्धं खलु भिन्धि भेद्यम् ॥

अत्र धूर्तो मायावी धनलुब्धो जनोऽज्ञं धर्मश्रद्धालुं स्त्रीपुरुषवर्गं धर्मव्याजेन सत्यच्छद्मना वा सत्यं बोधयित्वा स्वार्थं साधयति । तस्मादियं सत्यसारूप्यं बोधयन्ती व्याजोक्तिर्मायोक्तिरपि कैश्चिदुच्यते ॥ २५ ॥

साम्प्रतं व्याजोक्तेस्तुल्ययोगिताया भेदं दर्शयति—

## विशिष्टेन साम्यार्थमेककालक्रियायोगस्तुल्ययोगिता ॥ २६ ॥

यत्र विशिष्टेनाधिकगुणवता पदार्थेन सह न्यूनगुणवतः पदार्थस्यापि साम्यार्थमेककालायां क्रियायां प्रयोगः क्रियते सा तुल्ययोगिता । तुल्यः समानकालो योगो विद्यते यस्यां सा तुल्ययोगिता । यथा—

नानाविधजनाकीर्णा पूर्णा धान्यसमृद्धिभिः ।
भूरियं धार्यते साब्धिर्विधात्रा साधुना च सा ॥

अत्र विधात्रा सह साधोरप्येककालक्रियायां योग इति तुल्ययोगितालङ्कारः ॥ २६ ॥

इदानीं तुल्ययोगिताया आक्षेपस्य भेदमाह—

## उपमानाक्षेपश्चाक्षेपः ॥ २७ ॥

तुल्यकार्यार्थस्य नैरर्थक्यविवक्षायां यत्रोपमानस्याक्षेपः प्रतिषेधो विधीयते स आक्षेपः । आक्षिप्यते प्रतिषिध्यते उपमानमस्मिन्नित्याक्षेपः । यथा—

उदितेऽत्र जगद्दीपे किं दीपेन तवामुना ।
किं वा वसुन्धराधीशैः प्रसन्ने परमेश्वरे ॥

अत्र दीपो वसुन्धराधीशाश्चाक्षिप्यन्ते प्रतिषिध्यन्त इति यावत् ॥ २७ ॥

इदानीमाक्षेपात्सहोक्तेर्भेदं दर्शयति—

## वस्तुद्वयक्रिययोस्तुल्यकालयोरेकपदाभिधानं सहोक्तिः ॥ २८ ॥

यत्र समकालयोर्वस्तुद्वयक्रिययोरेकपदेनैव कथनं स्यात् सा सहोक्तिः । सहोच्यतेऽर्थो यस्यां सा सहोक्तिः । यथा—

ऐश्वर्यसंजातविलासितायां
पञ्चेन्द्रियाणां विषयातिसङ्गात् ।
प्रमादमद्यं परिपीय भूपा
राज्येन साकं यशसापि हीनाः ॥

अत्र भूपानां राज्ययशसोः समकालमेव हीनत्वं सहोक्तिमूलमिति स्फुटमेवास्ति । यथा वा—

प्रबोध्य सुप्तं भुवनं प्रगाढं ध्वान्ते तते सद्वचनैर्मयूखैः ।
श्रीमद्दयानन्दमहर्षिणास्मादस्तं प्रयातं सह भास्करेण ॥

अत्रापि महर्षिदयानन्दभास्करयोरेककालमेवास्तंगतमदर्शनं सहोक्तिनिदानम् ॥ २८ ॥

साम्प्रतं सहोक्तेः समाहितस्य भेदमाह—

## यत्सादृश्यं तत्सम्पत्तिः समाहितम् ॥ २९ ॥

यस्य वस्तुनः सादृश्यं गृह्यते तस्य सम्पत्तिरतिशयश्चेत् समाहितम् ।

तदुदाहरति यथा—

अध्यात्मसंप्रसादेन प्रोज्ज्वलां तामृतम्भराम् ।
प्रज्ञामिव विभूतिं त्वं संवर्द्धय सुहृन्मरणे ॥

अत्र केनचिद् योगिना निजसुहृदे प्रज्ञासादृश्येन विभूतेःसंवर्द्धनाय प्रोत्साहो दीयते ॥ २९ ॥

अधुना समाहितात्तद्गुणस्य भेदं प्रदर्शयति—

## स्वगुणविसर्गेऽन्यगुणादानं तद्गुणः ॥ ३० ॥

स्वगतगुणत्यागे सत्यन्यपदार्थगतगुणस्वीकरणं तद्गुणालङ्कारलक्षणम् । तस्य गुणस्तद्गुणः । यथा—

अज्ञोऽपि बुधसत्सङ्गादज्ञानं परिहाय तत् ।
विद्वत्त्वं लभते भद्रं तद्गुणैः समलङ्कृतम् ॥

अत्र प्रकाशमेव स्वगुणत्यागेन परगुणोपादानं क्रियत इति तद्गुणालङ्कारः ॥ ३० ॥

अधुना तद्गुणात्सारालङ्कारस्य भेदमुपदिशति—

## यथोत्तरमुत्कर्षः सारम् ॥ ३१ ॥

यत्रैकपदार्थापेक्षया वर्णनीयपदार्थेषूत्तरोत्तरमुत्कर्षः प्रतीयेत स सारालङ्कारः । यथा—

मेदिन्यां वरमस्ति भारतमिदं सौराष्ट्रदेशोऽत्र स
श्रेष्ठो भाति च मोरवीनृपपुरं रम्यं हि तत्रापि सा ।
टङ्कारानगरी चकास्ति रुचिरा तस्यां गृही चोत्तमः
श्रीकृष्णो दयिताऽथ तस्य सुगुणा तस्याश्च योगीश्वरः ॥

अत्र पृथिव्यां भारतवर्षं तत्र सौराष्ट्रदेशस्तत्र मोरवीराजनगरं तस्मिन्त्सा टङ्कारानगरी तस्यां स श्रीकृष्णो गृहस्थस्तस्य पत्नी गुणवती रुक्मिणी तस्याश्च योगीश्वरो दयानन्दः श्रेष्ठ इति क्रमेणोत्तरोत्तरमुत्कर्षः सारम् ॥ ३१ ॥

साम्प्रतं सारात्समाधेर्भेदमुदाहरति—

## कर्त्तव्ये कार्ये दैवसहायः समाधिः ॥ ३२ ॥

यत्र कर्त्तव्ये कर्मणि दैवेनापि साहाय्यं दीयते स समाधिर्नामालङ्कारः । समाधीयते दैवेनार्थोऽत्रेति समाधिः । यथा—

उद्युक्तस्य परार्थाय ज्ञानिनो मोहनाशिनः ।
दयानन्दस्य साहाय्यं विदधौ परमेश्वरः ॥

स्पष्टमेवात्र ॥

साम्प्रतं समाधेः काव्यलिङ्गस्य भेदं कथयति—

## हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गम् ॥ ३३ ॥

हेतोः कारणस्य वाक्यगतपदार्थनिष्ठत्वे सति काव्यलिङ्गमलङ्कारः । काव्यस्य वाक्यार्थभूतं लिङ्गमत्रास्तीति काव्यलिङ्गम् । यथा—

मिथ्योक्तिग्रथितान् ग्रन्थानस्माकं मूर्त्तिपूजनम् ।
अर्थमूलं निरस्यार्यैरापच्छिरसि पातिता ॥

अत्र चतुर्थपादे पादत्रयगतवाक्यानि हेतवः । आर्याणां वृद्धिमवलोक्य पौराणिकजनानां निजाजीविकाविनाशभीतानां विलापोऽयम् ॥ ३३ ॥

इदानीं काव्यलिङ्गान्निश्चयस्य भेदं निगदति—

## आरोप्यमाणमुत्सृज्य प्रकृतस्थापनं निश्चयः ॥ ३४ ॥

कस्मिन्नपि पदार्थे आरोप्यमाणं धर्मं निवार्य तद्गतधर्मस्थापनं निश्चयालङ्कारः । निश्चिनोत्यर्थमस्मिन्निति निश्चयः यथा—

आरोपितां स्वार्थपरायणैर्जनै—
र्निषिध्य पूजां जडतागतां विभौ ।
अमूर्तसर्वज्ञगुरौ महेश्वरे
ध्रुवं कृता भक्तिरिहार्यमानवैः ॥

अत्र ध्रुवमिति निश्चयसूचकमव्ययम्। आर्यैरारोप्यमाणां जडपूजाधर्मं परिहाय निराकारसर्वज्ञमहेश्वरस्य ध्यानमयीमुपासनां कर्तुमारभ्यत ध्रुवमिति निश्चयालङ्कारः ॥ ३४ ॥

प्रकारेणामुना वर्णित उपमाप्रपञ्चः। प्रतिपादिताश्चार्थालङ्काराः।

त इमे शुद्धाः प्रयुक्ता मिश्रा अपि प्रयोक्तव्या इति निदर्शयितुमिदानीं संसृष्टिमाह—

**अलङ्कारस्यालङ्कारयोगित्वं संसृष्टिः ॥ ३५ ॥**

एकस्यालङ्कारस्यालङ्कारान्तरेण सह योगे संसृष्टिरलङ्कारो जायते ॥३५॥

**तद्भेदावुपमारूपकोत्प्रेक्षावयवौ ॥ ३६ ॥**

तस्याः संसृष्टेर्भेदौ तद् भेदौ द्वाववगन्तव्यौ। तयोराद्य उपमारूपकम्। द्वितीयस्तूत्प्रेक्षावयवः। तत्राद्योदाहरणं यथा—

सदर्थिकल्पद्रुम एष नन्दनो
न नन्दनस्थोऽपि ननन्द सोऽर्थिनम्।
तमस्तमस्सार्थमनर्थपातिनं
त्विषामिवेशस्समपातयत्स्वयम् ॥

( प्रकृतिसौन्दर्ये अ० ६ श्लो० ५ )

अत्र त्विषामीशः सूर्य इवेति पूर्णोपमा। सदर्थिकल्पद्रुमः, तमस्तमस्सार्थश्चेति द्वयं रूपकम्। न नन्दनस्थोऽपि नन्दन इति विरोधाभासः। नन्दनो नन्दन इति यमकालङ्कारः। सर्वेषामेषामलङ्काराणां सङ्करे संसृष्टिः सम्पद्यते ॥ ३६ ॥ द्वितीयमाह—

**उत्प्रेक्षाहेतुरुत्प्रेक्षावयवः ॥ ३७ ॥**

उक्तलक्षणा उत्प्रेक्षा हेतुर्निदानं यस्य स उत्प्रेक्षावयवो द्वितीयः संसृष्टिभेदः ' यथा—

तापापनोदनकृते कृतहर्षवर्षा
वर्षानटीह वियदङ्गनरङ्गमेत्य ।
उत्तुङ्गनीरदमृदङ्गनिनादभङ्गी—
संगीतकं नु तनुते तडिदत्तनेत्रा ॥
( प्रकृतिसौन्दर्ये अ० ४ श्लो० ७ )

अत्र नु इत्युत्प्रेक्षायाम् । वर्षानटी सङ्गीतकं तनुते नु ? इत्युत्प्रेक्षा । वर्षानटी, वियदङ्गनरङ्गम्, नीरदमृदङ्ग इति रूपकम् । कृतहर्षवर्षा, इति स्वभावोक्तिः । तनुत इत्येकक्रियायोगाद् दीपकम् । कृते कृत-हर्ष वर्षा-दङ्ग-रङ्ग-तुङ्ग-मृदङ्ग-त-न-ते-त-न्त-रद-मृद नादेतिशब्दानुप्रासः । सर्वेषामेषां सङ्करे संसृष्टिः । दिशाऽनया बहूनामलङ्काराणां संसर्गे बहवः संभवन्ति भेदास्ते सर्वेऽपि संसृष्टेरेवेति सर्वमवदातम् ॥ ३७ ॥

इति श्रीमन्मुनिमेधाव्रताचार्यकविरत्नविरचितायां व्रतिमङ्गलाभिधायां
यास्कीय-काव्यालङ्कारसूत्रवृत्तौ उभयालङ्कारविवेचनं
नाम दशमोऽध्यायः ॥ १० ॥

---

# अथ एकादशोऽध्यायः ॥

निदर्शिताः पूर्वगतेष्वध्यायेषु यथायथं शब्दगता अर्थगता उभयगताश्चालङ्काराः। अधुना कतिपयप्रधानकाव्यनियमविवेचनमुपक्रमते यास्काचार्यः—

## नैकं पदं द्विः प्रयोज्यं प्रायेण ॥ १ ॥

गद्यकाव्ये पद्यकाव्ये च प्रायेणैकं पदं द्विवारं न प्रयुज्यताम्। यथा—देवदेवेति। प्रायो बाहुल्यम्। बाहुलकात्क्वचित्प्रयोक्तव्यमपि यथा—सन्तः सन्तः खला खला इति। यमकानुप्रासादौ तु तत्तत्सूत्रनियमान्नातिप्रसङ्गः ॥ १ ॥

## नित्यं संहितैकपदवत्पादेष्वर्द्धान्तवर्जम् ॥ २ ॥

'संहितैकपदे नित्या' इति वैयाकरणानामाम्नायस्तत्र यथैकपदे वैयाकरणैर्नित्या संहिता विधीयते तथा पद्यगतसमस्तचरणेष्वर्द्धान्तं वर्जयित्वा कविभिरपि संहिता प्रयुज्यताम् ॥ २ ॥

## न पादान्तलघोर्गुरुत्वं च सर्वत्र ॥ ३ ॥

सर्वत्र वृत्तमात्रे पादान्ते विद्यमानस्य लघोर्गुरुत्वं न विधेयम्। अत्र सूत्रे चकारोऽर्द्धान्तवर्जमित्यनुकर्षणार्थस्तेनार्द्धान्त एवायं नियमो न प्रथमतृतीयपादयोः। मन्दाक्रान्तामालिनीवसन्ततिलकेषु वृत्तेषु सर्वपादान्तलघोर्गुरुत्वम्। वंशस्थादौ तु विषमपादयोरेवान्त इति कविसमयः ॥ ३ ॥

## न गद्ये समासप्रायं वृत्तमन्यत्रोद्गतादिभ्यः संवादात् ॥ ४ ॥

उद्गतादिभ्यो वृत्तेभ्योऽन्यत्र गद्येन सह गद्यस्य संवादाद्धेतोर्गद्ये समासप्रायं वृत्तं न प्रयोक्तव्यम्। एतावता वृत्तगन्धि गद्यं न सम्पादनीयमिति

ध्वन्यते। उद्गतादौ त्वेकत इति वचनात्प्रथमपादान्ते वृत्तं समाप्तमेव भवति। तस्माद् गद्यमतिदीर्घपदं विधेयमित्यायातम्। उद्गतादिग्रहणं स्वपरमतैक्य-द्योतनार्थम्। गद्येन सह गद्यस्य मेलनं संवादः॥ ४॥

## न पादादौ खल्वादयः॥ ५॥

वृत्तमात्रे पादस्यादौ "खलु, किल, बत, हन्त" प्रभृतयो न प्रयोक्तव्याः। अलङ्कारापेक्षया तु" मन्ये शङ्के ध्रुवं प्रायो नूनमिवादीनां प्रयोगो भवत्येव स च मध्येऽन्ते च॥ ५॥

## नार्द्धे किञ्चिदसमाप्तप्रायं वाक्यम्॥ ६॥

वृत्तमात्रे पद्यमध्येऽसमाप्तप्रायं वाक्यं न प्रयोक्तव्यम्। विषमपादयोरन्ते तु वाकोवाक्यादौ तथाविधं प्रयुज्यत एव प्रश्नोत्तरप्रसङ्गात्॥ ६॥

## न कर्मधारयो बहुव्रीहिप्रतिपत्तिकरः॥ ७॥

प्रतिपत्तिर्द्योतनम्। बहुव्रीहिसमासप्रतिपत्तिकरः। कर्मधारयसमासः काव्ये न प्रयोज्यः। यथा—धूर्त्तगुरुः। अत्र धूर्त्तश्चासौ गुरुरिति कर्मधारयो धूर्त्तो गुरुर्यस्येति बहुव्रीहेः प्रतिपत्तिं करोति॥ ७॥

## तेन विपर्ययो व्याख्यातः॥ ८॥

पूर्वापरपरिवर्तनं विपर्ययः। अर्थाद् यथा बहुव्रीहिप्रतिपत्तिकरः कर्मधारयो न प्रयोक्तव्यस्तथैव कर्मधारयप्रतिपत्तिकरो बहुव्रीहिरपि न प्रयोज्यः। यथा—वीरपुरुषः। अत्र वीराः पुरुषा यस्येति बहुव्रीहिः—
वीरश्चासौ पुरुष इति कर्मधारयप्रतिपत्तिं करोति॥ ८॥

## सम्भाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ॥ ९॥

संभाव्यस्य संभविनो निषेधस्य निवर्तने प्रत्याख्याने द्वौ प्रतिषेधौ प्रतिवाचकौ शब्दौ प्रयोक्तव्यौ। यथा—

"विजयिनाऽतिबलेन शिवाजिना।
न, न, जितः किमहो! यवनाधिपः॥"

किन्तु विजित एवेत्यत्र निषेधस्य प्रत्याख्यानम् । अत एव द्वौ नञौ प्रकृतमर्थं गमयत इति साहित्यविदः ॥ ९ ॥

## विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ ॥ १० ॥

येन विशिष्यते तद् विशेषणम् । यद् विशिष्यते तद् विशेष्यम् । विशेष्यस्य प्रतिपत्तौ जातायां सत्यां विशेषणमात्रस्यैव प्रयोगः कार्यः । प्रतिपत्तिः प्रतीतिः । यथा—'समुद्रवसना तस्य क्षितीशस्य वशेऽभवत्' अत्र पृथिव्या विशेषणमात्रमेव प्रयुक्तम् ॥ १० ॥

## सर्वनाम्नाऽनुसन्धिर्वृत्तिच्छन्नस्य ॥ ११ ॥

कृत्तद्धितसमासैकशेषसमासान्तधातुरूपाः पञ्चवृत्तयः । तास्वत्र वृत्ति-पदेन समासवृत्तेर्ग्रहणम् । समासवृत्त्या छन्नस्य गुणीभूतस्य पदार्थस्य सर्वनाम्ना सर्वनामवाचकेन शब्देनानुसन्धिरनुसन्धानं विधीयताम् । यथा—

"तवापि विद्याविभवैकशालिनो
मुखस्य तत्साम्यमुपागता प्रभा"

अत्र विद्याविभवैकशालिन इति समासवृत्त्या गौणस्य युष्मदस्तच्छब्दे-नानुसन्धानम् ॥ ११ ॥

## सम्बन्धसम्बन्धेऽपि षष्ठी क्वचित् ॥ १२ ॥

सम्बन्धेन सम्बन्धः सम्बन्धसम्बन्धस्तत्र क्वचिदेव न सर्वत्र षष्ठी प्रयुज्यताम् । यथा—कमलस्य कन्दः । अत्र कमलेन सम्बन्धवती कमलिनी तस्याः कन्द इति सम्बन्धसम्बन्धः । तेन कदलीकाण्डादयोऽपि व्याख्याताः ॥ १२ ॥

## अतिप्रयुक्तं देशभाषापदम् ॥ १३ ॥

काव्ये यदतिप्रयुक्तं देशभाषापदं तदवश्यं प्रयुज्यताम् । तदिदं यथा—

"स्फुरत्तडिज्जिह्वमुखान्तराला चलद्बकाली-द्विजभीतबाला ।
मसीव कालाऽतिनिपीतहाला मुहुर्मुहुर्वर्षति मेघमाला ॥"

द्विजा 'दन्तविप्राण्डजा द्विजा' इत्यभिधानात् पक्षिणोऽत्र ग्रहणम् । [ अखिलानन्दकविरत्नम् । ] ॥ १३ ॥

## लिङ्गाध्याहारौ ॥ १४ ॥

अतिप्रयुक्तमित्यनुवर्तते । लिङ्गश्चाध्याहारश्च लिङ्गाध्याहारौ । कविभिरतिप्रयुक्तौ लिङ्गाध्याहारौ काव्ये प्रयुज्येताम् । तत्र लिङ्गं पुन्नपुंसकादि । आवश्यकावशिष्टपदानयनमध्याहारः । तत्राद्ये यथा—"विधेहि गण्डूषमनेकवारम्" अत्र स्त्रियां प्रयुक्तस्य गण्डूषशब्दस्य कविभिरतिप्रयुक्तत्वात्पुंस्त्वम् । अध्याहारो यथा—

"मा भवन्तं मनसिजो न मात्सर्यमदौ सखे ।
न मोहभयशोकाद्याः स्वस्ति भूयाद्यथोत्तरम् ॥"
( अखिलानन्दकविवरः )

अत्र बाधेत बाधेयातां बाधेरन्निति क्रियाणामध्याहारः । अन्यदेवम् ॥ १४ ॥

## लक्षणाशब्दाश्च ॥ १५ ॥

अतिप्रयुक्तपदमनुवर्तते । कविभिरतिप्रयुक्ता लक्षणार्थाः शब्दा अपि काव्येऽवश्यं प्रयुज्यन्ताम् । लक्षणया येषामर्थप्रत्ययो भवति त एवमुच्यन्ते । यथा द्विरेफाद्या भ्रमराद्यर्थाः ॥ १५ ॥

## न तद्बाहुल्यमेकत्र ॥ १६ ॥

कविभिरतिप्रयुक्तानां लक्षणाशब्दानामेकत्र वाक्ये पद्ये वा बाहुल्यं न विधेयम् । शक्यते ह्येकस्यावाचकस्य वाचकवद्भावः कर्त्तुम् ? न बहूनामिति ॥ १६ ॥

**स्तनादीनां द्वित्वाविष्टा जातिः प्रायेण ॥ १७ ॥**

प्रायेण स्तनादीनां जातिर्द्वित्वाविष्टा द्विवचनेनाध्यासिता प्रयोक्तव्या । आकृतिग्रहणा जातिः । यथा—मातुः स्तनयोः । न भवति मातुः स्तनस्येति । प्रायिकञ्चैतत् । तेन क्वचिद् भवत्यपि तत्तत्र तत्रोह्यम् ॥ १७ ॥

इति श्रीमन्मुनिमेधाव्रताचार्यकविरत्नविरचितायां व्रतिमङ्गलायां यास्कीयकाव्यालङ्कारसूत्रवृत्तौ काव्यनियमविवेचनं नाम एकादशोऽध्यायः ॥

---

# अथ द्वादशोऽध्यायः ॥

विवेचिता पूर्वस्मिन्नध्याये कतिपये काव्यनियमाः । सम्प्रति शब्दशुद्धि-विवेचनाय प्रवर्तते तत्रभवान् यास्काचार्यः—

## रुद्राविल्येकशेषोऽन्वेष्यः ॥ १ ॥

रुद्रश्च रुद्राणी चेति द्वन्द्वे "पुमान् स्त्रिये"त्येकशेषः प्राप्नोति स च न भवितुमर्हति । वृद्धो यूनेति सूत्रात्तल्लक्षणश्चेत्यनुवृत्तौ "स्त्रीपुंसकृतविशेष एव तत्प्रवृत्तेः । इह तु "पुंयोगादाख्यायामिति" नियमाद् विशेषान्तर-मप्यस्ति । पुंसो रुद्रस्य योगादेव रुद्राणीशब्दस्य स्त्रियां प्रवृत्तेः । तद् योगादेव च "इन्द्रवरुणेति" सूत्रेणाऽनुगागमविधानात् । अत एव रुद्राविति प्रयोगे एकशेषोऽन्वेषणीय इति यास्काचार्यः । एवमिन्द्रौ भवौ शर्वावित्यादयः प्रयोगा अप्यशुद्धा एवेति बोध्यम् ॥ १ ॥

## मिलिक्लबिक्षपिप्रभृतीनां धातुत्वं धातुगणस्यासमाप्तेः ॥ २ ॥

मिलति विक्लबति क्षपयतीति प्रयोगाणां गणेष्वेतन्मूलक धात्वभावा-त्कथं धातुत्वम् । गणपठितानामेव धातुसंज्ञाविधानात् । अत्र समाधत्ते—वर्धते धातुगण इति हि शब्दविद आचक्षते । अत एव धातुगणस्यासमाप्ते-रेषां धातुत्वम् । शिष्टप्रयोगात् ॥ २ ॥

## वलेरात्मनेपदमनित्यं ज्ञापकात् ॥ ३ ॥

वलेरनुदात्तत्वाद् यदात्मनेपदं प्राप्यते तदनित्यं कथमिति चेज्ज्ञापकात् ॥ ३ ॥

किं तज्ज्ञापकमित्यत्राह—

## चक्षिङोऽनुबन्धकरणम् ॥ ४ ॥

अनुदात्तङित आत्मनेपदमिति पाणिनेः सूत्रम्। तत्र चक्षिङ इकारेणै-वानुदात्तेन सुतरामात्मनेपदे सिद्धे पुनर्ङित्करण "मनुदात्तेत्वलक्षणमात्मने-पदमनित्यमिति" परिभाषां ज्ञापयति। तेन वलेरुभयपदवत्त्वम्। एतेन वेदि-भर्त्सि-तर्जिप्रभृतयो व्याख्याता वेदितव्याः। आवेदयति, भर्त्सयति, तर्जयतीत्यादीनां प्रयोगाणां दर्शनात्॥ ४॥

## क्षीयत इति कर्मकर्तरि ॥ ५ ॥

गणेषु क्षीयतेरनात्मनेपदित्वात् क्षीयते-इति प्रयोगः कथमित्यत्राह कर्म-कर्तरीति कर्मवत्कर्मणा तुल्यक्रिय इति सूत्रेण कर्तुः कर्मत्वे "यगात्मनेपद-चिण्चिण्वदिटां विधानात्।" ॥ ५ ॥

## स्विद्यत इति च ॥ ६ ॥

स्विदेर्दैवादिकत्वात् स्विद्यत इति प्रयोगः कथमित्यत्रापि पूर्वमेव समाधानम् "कर्मकर्तरीति" ॥ ६ ॥

## मार्गेरात्मनेपदमलक्ष्म ॥ ७ ॥

चुरादौ 'मार्ग अन्वेषणे' इति पठ्यते 'आधृषाद्वा' इति वार्तिकवशाद् विकल्पितणिच्कः। तस्माद्यदात्मनेपदं दृश्यते—'मार्गन्तां देहभारम्। इति तदलक्ष्म अलक्षणम्। परस्मैपदित्वान्मार्गेः। तथा च शिष्टप्रयोगः—'कर किसलयं धूत्वा धूत्वा विमार्गति वाससी ॥ ७ ॥

## लोलमानादयश्चानशि ॥ ८ ॥

लोलमानो वेल्लमान इत्यादयो ये प्रयोगास्ते 'ताच्छील्यवयोवचने'ति सूत्रेण विहिते चानशि साधनीया न शानचि धातूनां परस्मैपदित्वात्॥ ८ ॥

## लभेर्गत्यर्थत्वाण्णिच्यणौ कर्तुः कर्मत्वाकर्मत्वे ॥ ९ ॥

अस्त्ययं लभिर्यः प्राप्त्युपसर्जनां गतिमाह, अस्ति च यो गत्युप-सर्जनां प्राप्तिमाहेति। अत्र पूर्वस्मिन् पक्षे गत्यर्थत्वाल्लभेर्णिच्यणौ यः कर्ता

तस्य "गतिबुद्धीति" सूत्रेण कर्मसंज्ञा । यथा—'दीर्घिकासु कुमुदानि विकासं लम्भयन्ति शिशिराः शशिभासः ।' द्वितीयपक्षे तु गत्यर्थाभावान्नभेर्णिच्यणौ कर्तुर्न कर्मसंज्ञा । यथा—

"सितं सितिम्ना सुतरां मुनेर्वपु—
विसारिभिः सौधमिवाथ लम्भयन् ।
द्विजावलिव्याजनिशाकरांशुभिः
शुचिस्मितां वाचमवोचदच्युतः ।।" ॥ ९ ॥

## ते मे शब्दौ निपातेषु ॥ १० ॥

त्वया मयेत्यस्मिन्नर्थे प्रयुक्तौ यौ ते मे शब्दौ तौ न युष्मदस्मदोः स्थाने विहितावादेशौ किन्तु निपातेषु द्रष्टव्यौ प्राग्रीश्वरान्निपाताः । स्वरादिनिपातमव्ययम् । तदिदं विभक्तिप्रतिरूपकम् । यथा—'श्रुतं ते वचनं तस्य ।' 'वेदानधीत इति नाधिगतं पुरा मे ।' इत्यत्र त्वया मयेत्यस्मिन्नर्थे ते मे शब्दौ प्रयुक्तौ वेदितव्यौ ।। १० ।।

## तिरस्कृत इति परिभूतेऽन्तर्ध्युपचारात् ॥ ११ ॥

परिभूतेऽर्थे तिरस्कृत इति शब्दः प्रयुज्यते यथा राज्ञा तिरस्कृत इति । स चायं न भवितुमर्हति । तथा हि तिरः शब्दस्य "तिरोऽन्तर्धाविति" सूत्रेण विहितायां गतिसंज्ञायां "तिरसोऽन्यतरस्यामिति" सूत्रेण सकारविधानात् । तर्हि पुनः कथमस्य प्रयोग इत्यत्राह—अन्तर्ध्युपचारात् । परिभूतः किल जनोऽन्तर्हितवद् भवति । मुख्यस्तु प्रयोगो यथा—'लावण्यप्रसरतिरस्कृताङ्गलेखाम् । इति ।। ११ ।।

## नैकशब्दः सुप्सुपेति समासात् ॥ १२ ॥

'अरण्यानी रम्या फलनमितनैकावनिरुहा ।'

इति काव्येषु नैकशब्दः पठ्यते स च न सिध्यति तथा हि नञ्समासे "नलोपो नञः" इति सूत्रेण नलोपोत्तरं "तस्मान्नुडचि" इति नुड्विधाने अनेकमिति दर्शनात् । निरनुबन्धस्य च न शब्दस्य समासविधानाभावात् ।

तत्कथमयं साधुरित्यत्राह—सुप्सुपेति समासात्। सह सुपेति सूत्रे सुप इति योगविभागात् सुबन्तस्य नेत्यस्य एकेति सुबन्तेन सह समाससम्भवात्। सुबन्तत्वं त्वस्याव्ययादाप्सुप इति सुपो लुग्विधानात्। कार्यकालपक्षे प्रत्ययलोपे प्रत्ययलक्षणत्वाच्च ॥ १२ ॥

## मधुपिपासुप्रभृतीनां समासो गमिगाम्यादिषु पाठात् ॥ १३ ॥

'मधुपिपासुमधुव्रतसेवितं मुकुलजालमजृम्भत वीरुधाम्।' द्वितीयाश्रितेति सूत्रे "श्रितादिषु गमिगाम्यादीनामुपसंख्यान"मिति वार्त्तिकं पठ्यते। तत्रादि शब्दात्पिपासुप्रभृतीनां ग्रहणं करणीयम्। पातुमिच्छुः पिपासुः ॥ १३ ॥

## त्रिवलीशब्दः सिद्धः संज्ञा चेत् ॥ १४ ॥

दिक्संख्ये संज्ञायामिति सूत्रेण संख्यावाचकस्य त्रिशब्दस्य संज्ञायां गम्यमानायां वलीति शब्देन समासे त्रिवलीशब्दः सिद्धः। संज्ञाया अभावे त्वशुद्ध एव ॥ १४ ॥

## बिम्बाधर इति वृत्तौ मध्यमपदलोपिन्याम् ॥ १५ ॥

"उपमितं व्याघ्रादिभिः सामान्याप्रयोग" इत्यनेनाधरशब्दस्य बिम्बेन सह समासे अधरबिम्बमिति भवितुं युक्तं सामान्यस्याप्रयोगात्तत्कथमयं प्रयोगः साधुरित्यत्राह—वृत्ताविति। वृत्तिः समासः। शाकपार्थिवादित्वान्मध्यपदलोपे—"बिम्बाकारोऽधरो बिम्बाधर" इति भवति तेन बिम्बोष्ठादयः सिद्धाः ॥ १५ ॥

## आमूललोलादिषु वृत्तिर्विस्पष्टपटुवत् ॥ १६ ॥

विस्पष्टं च तत्पटु विस्पष्टपटु-इतिवन्मयूरव्यंसकादित्वादामूलं च तल्लोलमामूललोलमित्यादिषु वृत्तिः समासो भवितुमर्हति ॥ १६ ॥

## न धान्यषष्ठादिषु षष्ठीसमासप्रतिषेधः पूरणेनान्य-तद्धितान्तत्वात् ॥ १७ ॥

'पूरणाद्भागे तीयादन्'' ''षष्ठाष्टमाभ्यां ञ चेति'' सूत्राभ्यामन्–प्रत्ययान्तस्य षष्ठशब्दस्य ''षष्ठो भागः षष्ठो धान्यस्य षष्ठो भागो धान्यषष्ठ'' इत्यादिप्रयोगेषु ''पूरणगुणेति'' सूत्रेण षष्ठीसमासप्रतिषेधः प्राप्नोति स च न प्रवर्तते कुत इत्यत्राह—पूरणेनान्यतद्धितान्तत्वादिति । यत्र षण्णां पूरणः षष्ठ इति पठ्यते तत्रैव पूरणगुणेति निषेधः । यत्र षष्ठो भागः षष्ठ इति पठ्यते तत्र नायं निषेधः । तस्य पूरणे डडित्यधिकृत्य षट्कतिकतिपयचतुरां थुगिति सूत्रेण पूरणार्थे एव थुको विधानात् । यथा—''तान्युञ्छषष्ठाङ्कितसैकतानि शिवानि वस्तीर्थजलानि कच्चित्'' ॥ इति कविरत्नं कालिदासः । इत्यादिषु न षष्ठीसमासप्रतिषेधः ॥ १७ ॥

## पत्रपीतिमादिषु गुणवचनेन ॥ १८ ॥

पत्रस्य पीतिमा इत्यादिप्रयोगेषु पीतिमादीनां गुणत्वात् 'पूरणगुणेति' सूत्रेण षष्ठीसमासः प्रतिषिध्यते । स च युक्त एव । यैस्तु समस्यते ते बालिशा एव ॥ १८ ॥

## अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः ॥१९॥

विशिष्टमधिकरणं व्यधिकरणम् । जन्माद्युत्तरपदो बहुव्रीहिः समासः, अवर्ज्यो न वर्जितुं योग्यः करणीय एवेत्यर्थः । एतावता ''सच्छास्त्रजन्मा हि विवेकलाभः'' इत्यादि सिद्धम् । अत्र च सच्छास्त्र एव जन्मस्थानं यस्येति व्यधिकरणम् ॥ १९ ॥

## हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदात् ॥ २० ॥

आहिताग्न्यादिषु हस्ताग्राग्रहस्तादीनामदर्शनात्कथमेषां प्रयोगः साधीयानित्यत्राह गुणगुणिनोर्भेदाभेदादिति । तत्र गुणगुणिनोर्भेदे हस्ताग्रम् । अभेदे त्वग्रहस्त इति ॥ २० ॥

## पूर्वनिपातेऽपभ्रंशो रक्ष्यः ॥ २१ ॥

तृणकाष्ठं काष्ठतृणमित्यादिषु प्रयोक्तव्येषु यदृच्छया तृणकाष्ठादीनां पूर्वनिपातो दृश्यते तत्रापभ्रंशो रक्ष्यो रक्षणीय इत्यर्थः। नायमपभ्रंश इति प्रत्येतव्यं शिष्टाचारात्। पूर्वनिपातस्यानित्यत्वज्ञापनं तु न सर्वविषयम् ॥२१॥

## निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः परिगणनस्य प्रायिकत्वात् ॥ २२ ॥

"अनभिहिते" इति सूत्रभाष्ये "अभिधानं तु प्रायेण तिङ्कृततद्धितसमासै" रिति पठ्यते, तत्प्रायिकं "क्वचिन्निपातेनाभिधानमिति" तत्रैव पठितत्वात्। एतावता निपातेनोक्ते कर्मण्यपि प्रथमैव न कर्मविभक्तिरिति सूत्रार्थः। अध्याहारो निपातः। यथा—( कुमार० २। ५५ )—"विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्" इति। पण्डितं मूर्ख इति मन्यते ॥ २२ ॥

## शक्यमिति रूपं विलिङ्गवचनस्यापि कर्माभिधायां सामान्योपक्रमात् ॥ २३ ॥

विगतलिङ्गवचनस्यापि शकेः "शकिसहोश्चेति" कर्मणि यकि कृते शक्यमिति रूपं, तत्कर्माभिधायां कर्मवचने सामान्योपक्रमाद् विशेषानपेक्षत्वात्सर्वत्र प्रयोक्तुमर्हम्। एतावता शक्यः परोपकारः शक्या परिव्रज्या शक्यं वेदाध्ययनमिति भवति ॥ २३ ॥

## हानिवदाधिक्यमप्यङ्गानां विकारः ॥ २४ ॥

"येनाङ्गविकार" इति सूत्रेण विकारमासादङ्गात्तृतीया विधीयते। तत्राङ्गानां हानिवदाधिक्यमपि विकार इति बोध्यम्। एतावता यथाऽक्ष्णा काण इति प्रयुज्यते तथा मुखेन त्रिलोचनो वपुषा चतुर्भुज इत्यपि प्रयोज्यम् ॥ २४ ॥

## न कृमिकीटानामेकवद्भावः प्रसङ्गात् ॥ २५ ॥

क्षुद्रजन्तव इत्यनेनैकवद्भावप्रसङ्गात् कृमिकीटानामिति यत् प्रयुज्यते तदयुक्तम् । मध्यमपदलोपिनः समासस्यासर्वविषयत्वात् सोऽपि न युज्यते कर्तुं तस्मादायुषः कृमिकीटानामिति कस्यचित् कवेः काव्यं चिन्त्यम् ॥ २५ ॥

## न खरोष्ट्रावुष्ट्रखरमिति पाठात् ॥ २६ ॥

गवाश्वप्रभृतिषु-उष्ट्रखरमिति पठ्यते तद्विरुद्धत्वात् खरोष्ट्राविति प्रयोगो न युक्तः । एतावता "खरोष्ट्रौ वाहनं येषामिति" वदन्तः प्रयुञ्जानाश्च सुतरां परास्ताः ॥ २६ ॥

## आसेत्यसतेः ॥ २७ ॥

असे गतिदीप्त्यादानेष्विति धातुषु पठ्यते तस्य लिटि 'आस' इति रूपम् । न चास्तेः । तस्य भूभावविधानात् । न चेदं चादिषु पठितं बभूवेत्यर्थे तिङन्तप्रतिरूपकमव्ययम् ॥ २७ ॥

## युध्येदिति युधः क्यचि ॥ २८ ॥

सम्प्रहारार्थस्य युधेरात्मनेपदित्वात्काव्ये युध्येदिति यत्क्वचित्पठ्यते तत्कथं साध्विति शङ्कायामुपस्थितायां समाधत्ते युधः क्यचीति । युध्यतीति युत् । युधमात्मन इच्छति युध्यति । इच्छेच्चेद् युध्येत् ॥ २८ ॥

## विरलायमानादिषु क्यङ्निरूप्यः ॥ २९ ॥

काव्ये पठितेषु विरलायमानादिषु क्यङ्प्रत्ययो निरूप्यः । तस्य सर्वथा-प्राप्त्यभावात् । भृशादिषु पाठोऽत्र हेतुः । नापि क्यष् । लोहितादिष्व-पाठात् । तस्मादसङ्गत एवायं प्रयोगः ॥ २९ ॥

## अहेतौ हन्तेर्णिच् चुरादिपाठात् ॥ ३० ॥

हेतुमति चेति सूत्रेण हेतौ णिज्विधीयते परन्तु घातयित्वेति प्रयोगे अहेतावपि हन्तेर्णिज् दृश्यते स कथमित्यत्राह—चुरादिपाठादिति । चुरादिषु "हन्त्यर्थाश्चेति" पठ्यते तस्मादयं णिच् ॥ ३० ॥

## अनुचरीति चरेष्टित्त्वात् ॥ ३१ ॥

नन्दिग्रहीति सूत्रे पचादिषु चरडिति पठ्यते तस्य टित्त्वाट्टिढढेति ङीप् । तदभावे तु न, ईकारलक्षणाभावात ॥ ३१ ॥

## केसरालमित्यलतेरणि ॥ ३२ ॥

भूषणाद्यर्थादलतेः केसरशब्दे कर्मण्युपपदे "कर्मण्यण" इत्यण् । केसरमलति भूषयतीति केसरालं भ्रमरयूथम् ॥ ३२ ॥

## पत्रलमिति लातेः के ॥ ३३ ॥

आदानार्थकाल्लातेः पत्रे कर्मण्युपपदे "आतोऽनुपसर्गे कः" इत्यनेन कः । पत्रं लात्यादत्ते-इति पत्रलमजयूथम् ॥ ३३ ॥

## महीध्रादयो मूलविभुजादिदर्शनात् ॥ ३४ ॥

"मूलविभुजादिभ्यः कः" इति वार्त्तिकेन महीध्रादयः शब्दाः सिध्यन्ति । महीं धारयतीति महीध्रो नगः । मूलविभुजादेराकृतिगणत्वाद् गुणध्रकुलध्रभुवनध्रादयोऽपि भवन्ति ॥ ३४ ॥

## ब्रह्मादिषु हन्तेर्नियमादरिहाद्यसिद्धिः ॥ ३५ ॥

"ब्रह्मभ्रूणवृत्रेष्विति" सूत्रे ब्रह्मादिष्वेवोपपदेषु हन्तेरेव क्विब्नेव भूत एवेति चतुर्विधस्य * नियमस्य व्यवस्थानादरिहादिशब्दानामसिद्धिः । असिद्धानामेषां प्रयोगोऽपि प्रामादिक एवेति ध्वन्यते ॥ ३५ ॥

## ब्रह्मविदादयः कृदन्तवृत्त्या ॥ ३६ ॥

"ब्रह्मभ्रूणवृत्रेष्विति" सूत्रे हन्तेरेव क्विपो विधानाद् ब्रह्मविदादयः शब्दाः कथं साधनीया इत्यत्राह—कृदन्तवृत्त्येति । क्विप् चेति "सूत्रेण धातुमात्रात् क्विपि कृते ब्रह्मादिभिः" षष्ठीसमासः । वेत्तीति वित्, ब्रह्मणो विद् ब्रह्मवित् । एवं गृहभिदादयोऽपि ॥ ३६ ॥

---

* "द्विविधोऽत्र नियम" इति महाभाष्यानुकूलं दृश्यतां भगवद्दयानन्दकृताष्टाध्यायीभाष्यं ( अ॰ ३–२–८७ ) ॥

## तैर्महीधरादयो व्याख्याताः ॥ ३७ ॥

तैर्ब्रह्मविदादिभिः शब्दैर्महीधरादयः शब्दा अपि व्याख्याता दर्शितसिद्धिमार्गाः । एतावता पचादेराकृतिगणत्वादचि षष्ठीसमासे च कृते धरतीति धरः । मह्या धरो महीधरइति भवति । गङ्गाधरादयोऽप्येवम् ॥ ३७ ॥

## भिदुरादयः कर्मकर्तरि कर्तरि च ॥ ३८ ॥

"विदिभिदिछिदेः कुरजिति" सूत्रवृत्तौ कर्मकर्तरि चायमिष्यत इति पठ्यते । तत्र 'च'कारस्य "कर्तरि चेति" समुच्चयार्थकत्वादिमे प्रयोगाः । सूर्येण भिद्यत इति सूर्यभिदुरं तमः । मत्सरैश्छिद्यत इति मत्सरच्छिदुरं प्रेम । एवमन्येऽपि ॥ ३८ ॥

## गुणविस्तरादयश्चिन्त्याः ॥ ३९ ॥

"प्रथने वावशब्दे" इत्यनेन विपूर्वकात्स्तृणातेरशब्दविषये प्रथने वाच्ये घञ् विधीयते । यथा—पटस्य विस्तार इति । विषयनियमादन्यत्र न घञ् । एतावता गुणविस्तरादयः प्रयोगाश्चिन्त्या अशुद्धाः इत्यर्थः ॥ ३९ ॥

## अवतरावचायशब्दयोर्दीर्घह्रस्वत्वव्यत्यासो बालानाम् ॥ ४० ॥

[ अवतरशब्दस्यावचायशब्दस्य च दीर्घत्वह्रस्वत्वयोर्व्यत्यासो बालानां बालिशानां प्रयोगेष्विति । ते ह्यवतरणमवतार इति प्रयुञ्जते—मारुतावतार इति स ह्ययुक्तः । भावे तरतेरब्विधानात् । ] करणाधिकरणयोश्चेति प्रस्तुताधिकारादवपूर्वात्स्तृणातेरवेतृस्त्रोर्घञ् इत्यनेन करणाधिकरणयोरेव घञ् विधीयते न भावे । अथ च "हस्तादाने चेरस्तेये" इत्यनेन घञि कृते नाचा भवितुं युज्यते । तस्मादाद्ये प्रयोगे भावे घञि कृते दीर्घता तदुत्तरे च ह्रस्वता बालानामज्ञानां मत एव न विदुषाम् । एतावता 'भयस्य पूर्वावतारः, पुष्पावचाय' इत्यादयो मावादीनां प्रयोगा अनुचिता एव ॥ ४० ॥

## शोभेति निपातनात् ॥ ४१ ॥

षिद्भिदादिभ्योऽङिति सूत्रे भिदादिराकृतिगणः पठ्यते तत्र "शुभ शुम्भ शोभार्थाविति" धातोरङि कृते 'क्ङिति चेति गुणप्रतिषेधेप्राप्ते निपातनाद् गुणप्रतिषेधाभावः । तदनन्तरं टाप् । निपातनाभावे तु नायं प्रयोगः सिध्यति ॥ ४१ ॥

## अविधौ गुरोः स्त्रियां बहुलं विवक्षा ॥ ४२ ॥

"गुरोश्च हल" इत्यत्र गुरुमतो हलन्तात् स्त्रियामप्रत्ययविधाने बहुलं विवक्षा । तया क्वचिदप्रत्ययविधानं क्वचिन्नेति सूच्यते । तत्र विवक्षायामीहा ऊहा इत्यादयः प्रयोगाः । अविवक्षायां बाधः, व्रीड इत्यादयः ॥ ४२ ॥

## व्यवसितादिषु क्तः कर्तरि चकारात् ॥ ४३ ॥

"गत्यर्थाकर्मकश्लिष" इत्यनेन भावकर्मविहितोऽपि क्तप्रत्ययश्चकारस्यानुक्तसमुच्चयार्थकत्वात् कर्तरि विधीयते । तेन व्यवसितमित्यादयः प्रयोगाः सिध्यन्ति ॥ ४३ ॥

## आहेति भूतेऽन्यलडन्तभ्रमाद् ब्रुवो लटि ॥ ४४ ॥

"आहेति" भूतकालिकमुवाचेत्यस्मिन्नर्थे तिङन्तप्रतिरूपकमव्ययं चादिषु पठ्यते । "ब्रुवः पञ्चानामादित आहो ब्रुवः" इत्यनेन लट्यपि— आहेति रूपं सम्पद्यते । तत्र केचिदज्ञास्तिङन्तार्थेऽव्ययमव्ययार्थे च तिङन्तं प्रयुञ्जते तदव्ययमन्यलडन्तभ्रमात्तिङन्तार्थे न प्रयोक्तव्यम् । अव्ययार्थस्यैव काव्ये प्रयोगदर्शनात् ॥ ४४ ॥

## शबलादिभ्यः स्त्रियां टापोऽप्राप्तिः ॥ ४५ ॥

शबलकल्माषादिशब्देभ्यः स्त्रियां टाप् न प्राप्नोति "अन्यतो ङीषित्यनेन" ङीषो विधानात् । तेन शबली कल्माषीत्यादि भवति न शबलेत्यादि ॥ ४५ ॥

## प्राणिनि नीलीति नित्यम् ॥ ४६ ॥

जानपदेति सूत्रे नीलशब्दः पठ्यते तत्र "प्राणिनि चेति" वार्त्तिकानुनुरोधात्प्राणिनि ङीष्। अप्राणिनि टाप्। तेन "कुवलयदलनीला कोकिला" इत्यादयः प्रयोगाः प्रामादिकाः। प्राणिनि नीलीति विधानात् ॥ ४६ ॥

## मनुष्यजातेर्विवक्षाऽविवक्षे ॥ ४७ ॥

"इतो मनुष्यजातेः, ऊङुतः" इतिसूत्रयोर्विषये मनुष्यजातेर्विवक्षाऽविवक्षे लक्ष्यानुसारतोऽवगन्तव्ये। क्वचिदिष्टस्थले कर्त्तव्ये तदन्यत्र न कर्त्तव्ये। कवीनामभीष्टमार्गत्वादेतत्कथनम् ॥ ४७ ॥

## ऊकारान्तादप्यूङ्प्रवृत्तेः ॥ ४८ ॥

"ऊङुतः" इत्यनेन ह्रस्वोकारान्तादूङ् तु विहित एव परमप्राणिजातेश्चारज्ज्वादीनामिति वार्त्तिकेन दीर्घोकारान्तादप्यूङ् विधीयते। तेन सुभ्रूशब्दादिकं सिध्यति ॥ ४८ ॥

## कार्त्तिकीय इति ठञ् दुर्धरः ॥ ४९ ॥

कालाट्ठञ् इत्यनेन केवलं कालवाचकेभ्य एव शब्देभ्यष्ठञ् विधीयते, न नक्षत्रवाचकेभ्यः शब्देभ्यस्तेन कार्तिकीय इति प्रयोगे "वृद्धाच्छ" इत्यनेन छ एव न ठञ्। अत एव सूत्रे दुर्धर इति कथनम् ॥ ४९ ॥

## शार्वरमिति च ॥ ५० ॥

चकारेण ठञ् दुर्धर इत्यनुवर्तते। शर्वर्यां भवं शार्वरमित्यत्रापि न ठञ्। कालवाचकशब्दाभावात्। तेन भवार्थकोऽण् प्रत्यय एव ॥ ५० ॥

## शाश्वतमिति प्रयुक्तेः ॥ ५१ ॥

"येषां च विरोधः शाश्वतिक" इत्यत्राचार्येण शाश्वतिक इति पठ्यते स चायमविहितठञ्प्रत्ययोऽप्याचार्यप्रयोगाद्विहितठञ्प्रत्यय इव प्रयुज्यते। परं शाश्वतमिति प्रयोगः कथं साधीयानित्यत्राह—प्रयुक्तेः=आचार्यप्रयोगात्। "शाश्वते प्रतिषेध" इति वार्त्तिकेन ठञि निवारिते साधुरयम् ॥ ५१ ॥

## राजवंश्यादयः साध्वर्थे ये भवन्ति ॥ ५२ ॥

"तत्र साधु"रित्यनेन साध्वर्थे य प्रत्ययो विधीयते तस्मिन् प्रयुक्ते सति राजवंशे साधू राजवंश्य इति विग्रहेण सिध्यत्ययं शब्दः । अन्येऽप्येवम् ॥ ५२ ॥

## दारवशब्दो दुष्प्रयुक्तः ॥ ५३ ॥

"नित्यं वृद्धशरादिभ्य" इत्यनेन विकारार्थे मयड् विधीयते तेन दारुम-यमिति भवति न दारवमिति तस्मादशुद्धोऽयं प्रयोगः । सूत्रे दुष्प्रयुक्त इति कथनात् ॥ ५३ ॥

## मुग्धिमादिष्विमनिज्मृग्यः ॥ ५४ ॥

पृथ्व्यादिषु दृढादिषु च मुग्धादिशब्दानां पाठाभावादिमनिचश्च तेभ्य एव विधानादेवंविधप्रयोगेषु तस्यान्वेषणं विधेयम् । प्रयोगा इमेऽशुद्धा एव ॥ ५४ ॥

## औपम्यादयश्चातुर्वर्ण्यवत् ॥ ५५ ॥

"चतुर्वर्णादीनां स्वार्थे ष्यञ उपसंख्यानम्" इत्यनेन तदन्तर्गणपठि-तेभ्यः शब्देभ्यः ष्यञ् विधीयते । गणान्तःपातित्वादौपम्यमिति भवति ॥ ५५ ॥

## ष्यञः षित्करणादीकारो बहुलम् ॥ ५६ ॥

"गुणवचन ब्राह्मणादिभ्य" इत्यनेन कर्मणि ष्यञ् विधीयते तस्य षित्करणाद् बहुलं ङीष् । तेन ब्राह्मण्यमित्यादिषु न । अन्यथा "यस्येति चे"त्यलोपे हलस्तद्धितस्येति यलोपे ब्राह्मणीति भवेत् ॥ ५६ ॥

## सामग्र्यमित्यादिषु विकल्पेन ॥ ५७ ॥

पूर्वसूत्रमनुवर्तते । ब्राह्मणादेराकृतिगणत्वात्समग्रादिभ्यः ष्यञि कृते षित्करणस्य वैकल्प्येन वा ङीष् । तेन सामग्र्यं सामग्रीत्युभयमपि भवति । विकल्पाभावे तु यस्येति चेत्यलोपे हलस्तद्धितस्येति यलोपे सामग्रीत्येव स्यात् ॥ ५७ ॥

## धन्वीति व्रीह्यादिषु पाठात् ॥ ५८ ॥

"व्रीह्यादिभ्यश्चेति" सूत्रेण मत्वर्थीय इन्प्रत्ययो विधीयते धन्वशब्दश्च व्रीह्यादिषु पठ्यते तस्मान्मत्वर्थीये इनि धन्वीति साधनीयम्। न णिनीति सूत्राभिप्रायः ॥ ५८ ॥

## चतुरस्रशोभीति णिनौ ॥ ५९ ॥

"सुप्यजातौ णिनिस्ताच्छील्ये" इत्यनेन ताच्छीलिके णिनौ चतुरस्रं शोभत इति चतुरस्रशोभि इति भवति। चतुरस्रं चतुर्धा विभक्तम् ॥ ५९ ॥

## कञ्चुकीया इति क्यचि ॥ ६० ॥

कञ्चुकमात्मन इच्छन्तीति विग्रहे सुप आत्मनः क्यजित्यनेन क्यच्। धात्ववयवत्वात्सुपो लुक् क्यचि चेत्यवर्णस्य ईः। कञ्चुको वारवाणोऽस्त्रीति कोषः। कञ्चुकमिच्छन्तीति कञ्चुकीया नाटकपात्रविशेषाः। निपातनात्तिपो लुक् ॥ ६० ॥

## बौद्धप्रतियोग्यपेक्षायामप्यातिशायनिकाः ॥ ६१ ॥

बौद्धस्य बुद्धिजन्यस्य प्रतियोगिनोऽभाववतोऽपेक्षायामप्यातिशायनिकाः प्रत्यया भवन्ति। अतिशयार्थे प्रयुक्ता आतिशायनिकास्ते च तरबादयो यथा—बहुलतरं प्रेमेति ॥ ६१ ॥

## कौशिलादय इलचि वर्णलोपात् ॥ ६२ ॥

कौशिकादिभ्यः शब्देभ्योऽनुकम्पायामर्थे घनिलचो चेत्यनेन इलचि विहिते "ठाजादावूर्ध्वं द्वितीयादचः" इत्यनेन ककारलोपाद्रूपसिद्धिः। अनुकम्पितः कौशिकः कौशिलः ॥ ६२ ॥

## मौक्तिकमिति विनयादिपाठात् ॥ ६३ ॥

मुक्ताशब्दस्य विनयादिगणे पाठाद् विनयादिभ्यष्ठगित्यनेन स्वार्थे ठकि कृते मुक्तैव मौक्तिकमिति भवति। तस्य च "स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्त इति" नपुंसकत्वम् ॥ ६३ ॥

## प्रतिभादयः प्रज्ञादिषु ॥ ६४ ॥

प्रज्ञादिगणपठितेभ्यः प्रतिभादिभ्यः शब्देभ्यः प्रज्ञादिभ्यश्चेत्यनेन स्वार्थेऽणि कृते प्रतिभैव प्रातिभमिति भवति । नपुंसकत्वं प्राग्वत् ॥ ६४ ॥

## न सरजसमित्यनव्ययीभावे ॥ ६५ ॥

अव्ययीभावसमासरहितस्थले सरजसमिति प्रयोगो न प्रयोक्तव्य इति सौत्रोऽर्थः । अव्ययीभावे तु सरजसमिति प्रयुज्यत एव ॥ ६५ ॥

## न धृतधनुषीति असंज्ञायाम् ॥ ६६ ॥

संज्ञारहितस्थले धृतधनुषीति न सिध्यति । धनुषश्चेत्यनेन नित्यमनङ्विधानात् । संज्ञायां तु वा संज्ञायामित्यनेन भवत्येवानङो विकल्पः ॥ ६६ ॥

## दुर्गन्धिपद इद्दुर्लभः ॥ ६७ ॥

"गन्धस्येदुत्पूतिसुसुरभिभ्य" इत्यत्र दुरः पाठाभावात्तत्पूर्वके गन्धशब्दे समासान्त इद् दुर्लभः . तस्माद् दुर्गन्ध इत्येव प्रयोक्तव्यम् ॥ ६७ ॥

## सुदत्यादयः प्रतिविधेयाः ॥ ६८ ॥

"अप्रान्तेति" सूत्रे चकारस्यानुक्तसमुच्चयार्थकत्वात् सुदतीत्यादिषु दत्रादेश इत्येके । स्त्रीवाचिनः सुदत्यादयो योगरूढिशब्दास्तेषु "स्त्रियां संज्ञायामि"त्यनेन वैकल्पिको दत्रादेशः सिद्ध एवेत्याचार्यमतम् ॥ ६८ ॥

## व्यूढोरस्क इति न कप् तदन्तविधिप्रतिषेधात् ॥ ६९ ॥

"ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नेति" प्रतिषेधाद् दृढोरःशब्दादुरःप्रभृतिभ्य इति न कप् । किन्तु व्यूढं दृढमुरो येषामिति वाक्यमेव ॥ ६९ ॥

## अवैहीति वृद्धिरवद्या ॥ ७० ॥

अव आङ् इहीत्यत्र, ओमाङोश्चेत्यनेन पररूपैकादेशे कृते गुण एव भवितुं युज्यते न वृद्धिस्तस्मादवैहीति प्रयुञ्जानाः परास्ताः । अवेहीति प्रयोगः साधुः ॥ ७० ॥

## अपाङ्गनेत्रेति लुगलभ्यः ॥ ७१ ॥

अपाङ्गे नेत्रे यस्या इति विग्रहे "अमूर्धमस्तकात्स्वाङ्गादकामे" इत्यनेन सप्तम्या अलुग्विधानाल्लुक्करणमशुद्धम् ॥ ७१ ॥

## नेष्टाः श्लिष्टप्रियादयः पुंवद्भावप्रतिषेधात् ॥ ७२ ॥

"स्त्रियाः पुंवद्भाषितपुंस्केति" सूत्रे प्रियादिषु पुंवद्भावस्य निषेधाद् वृद्धकान्तः श्लिष्टप्रिय इत्यादयः प्रयोगा न प्रयोक्तव्या इति भावः ॥ ७२ ॥

## दृढभक्तिरसौ सर्वत्र ॥ ७३ ॥

दृढभक्तिरित्यसौ शब्दः सर्वत्र सर्वलिङ्गेषु प्रयोक्तव्य इत्यर्थः । स्त्रियाः पुंवदिति सूत्रे स्त्रिया इति षष्ठ्यन्तपदस्याविवक्षितत्वात् सामान्यतया सर्वेषां पुंवद्भावदर्शनाच्च ॥ ७३ ॥

## जलजम्बुलतादयो ह्रस्वविधेः ॥ ७४ ॥

"इको ह्रस्वोऽङ्यो गालवस्येति" ह्रस्वविधानाज्जम्बूशब्दस्य ह्रस्वत्वे जल-सम्बन्धिनी जम्बूवृक्षलता जलजम्बुलतेति भवति ॥ ७४ ॥

## तिलकादयोऽजिरादिषु ॥ ७५ ॥

तिलकादीनामजिरादिगणे पाठान्मतौ बह्वचोऽनजिरादीनामित्यनेन दीर्घ-त्वाभावे मतुपि च तिलकवतीति भवति ॥ ७५ ॥

## निशम्यनिशमय्यशब्दौ प्रकृतिभेदात् ॥ ७६ ॥

सूत्रोपात्तौ द्वावप्येतौ शब्दौ प्रकृतेर्धातोर्भेदाद् भवतः । तत्र दैवादिकस्य "शमु उपशमे" इत्यस्य निशम्येति रूपम् । मित्संज्ञकस्य चौरादिकस्य "शमो दर्शने" इत्यस्य निशमय्येति रूपम् । तदुभयं धातूनामनेकार्थत्वात् श्रुत्वेत्यर्थः कविभिः प्रयुज्यते । गणकार्यमुभयत्रापि व्याकरणादवगन्तव्यम् ॥ ७६ ॥

## संयम्यनियम्यशब्दावणिजन्तत्वात् ॥ ७७ ॥

ल्यपि लघुपूर्वादित्यनेन णेरयादेशे कृते संयमयितुं नियमयितुमित्येवं भाव्यम् । पुनः कथमिमौ प्रयोगावित्यत्राह—अणिजन्तत्वादिति । अनयोरणिजन्तत्वान्नेमौ णिजन्तौ तस्मादेवम् ॥ ७७ ॥

## प्रपीयेति पीङः ॥ ७८ ॥

"पा पाने" इत्येतस्य "न ल्यपीति" सूत्रेणेत्वनिषेधे कथं प्रपीयेति रूपमित्यत्राह—पीङ इति । पीङ् पाने इतिधातोरेतद्रूपं बोध्यमित्यर्थः ॥ ७८ ॥

## दूरयतीति बहुलग्रहणात् ॥ ७९ ॥

प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्चेत्यत्र बहुलग्रहणात् । स्थूलदूरेत्यादिना यत्प्राप्तं तन्न भवति तस्माद् दूरयतीति । अन्यथा तु णाविष्ठवद्भावे स्थूलदूरेत्यादिना गुणलोपयोः कृतयोर्दवयतीति स्यात् ॥ ७९ ॥

## गच्छन्तीप्रभृतिष्वनिषेध्यो नुम् ॥ ८० ॥

शप्श्यनोर्नित्यमित्यनेन नित्यं नुमि प्राप्ते गच्छन्तीति भवितुं युक्तम् । तस्मान्नुमूरहितः प्रयोगः प्रामादिक एवेत्यलम् ॥ ८० ॥

## मित्रेण गोप्त्रेति पुंवद्भावात् ॥ ८१ ॥

इकोऽचि विभक्तावित्यनेन नुमो विधानाद् गोप्तृणेति भवितुमर्हम् । कथं गोप्त्रेत्यत्राह—पुंवद्भावादिति । तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्येति पुंवद्भावात् ॥ ८१ ॥

## वेत्स्यसीति पदभङ्गात् ॥ ८२ ॥

वेत्स्यसीति न तिङन्तम् । त्वमित्यर्थे असीत्ययं निपातः । वेत्सीति मध्यमपुरुषैकवचनम् । त्वं वेत्सीत्युभयोरर्थः ॥ ८२ ॥

## कामयानशब्दः सिद्धोऽनादिश्चेत् ॥ ८३ ॥

"आगमानुशासनमनित्यमिति" व्यवस्थित्या "आने मुक्" इत्यनेन प्राप्तो मुगागमो यद्यनित्यत्वान्न विधीयते तदाऽनादित्वात् कामयानशब्दः सिद्ध इति व्यवस्थितिः ॥ ८३ ॥

## सौहृददौर्हृदशब्दावणि हृद्भावात् ॥ ८४ ॥

युवादिगणपठितयोः सुहृददुर्हृदशब्दयो-र्हायनान्तयुवादिभ्योऽणित्यनेनाऽणि विहिते हृदयस्य हृल्लेखेत्यादिना अणि परे हृद्भावे च कृते सत्यां चादिवृद्धौ सौहृदं दौर्हृदमिति वेदितव्यम् ॥ ८४ ॥

## विरमेति निपातनात् ॥ ८५ ॥

"यम उपरमे" इति धातौ "उपरमे" इति मुनेः पाणिनेः कथनाद् विरमेत्यपि भवति । 'अतन्त्रश्चोपसर्ग" इति भाष्यनियमात् ॥ ८५ ॥

## उपर्यादिषु सामीप्ये द्विरुक्तेषु द्वितीया ॥ ८६ ॥

"उपर्यध्यधसः सामीप्ये" इत्यनेन सामीप्यार्थे द्विरुक्तेषूपर्यादिषु "उपर्यादिषु त्रिषु द्वितीयाम्रेडितान्तेषु" इति भाष्यपठितकारिकामध्यभागबलाद् द्वितीया कर्त्तव्येति सूत्रार्थः । आम्रेडितं द्विस्त्रिरुक्तमिति कात्यायनः ॥ ८६ ॥

## मन्दम्मन्दमित्यप्रकारार्थत्वे ॥ ८७ ॥

प्रकारार्थं विहाय नित्यवीप्सयोरित्यनेन वीप्सायां द्वित्वे कृते मन्दम्मन्दमिति भवति । प्रकारे तु गुणवचनस्यैवेति नियमान्नेति भावः ॥ ८७ ॥

## न निद्राध्रुगिति भष्भावप्राप्तेः ॥ ८८ ॥

एकाचो बशो भषित्यनेन भष्भावे कृते निद्राध्रुगिति भवितुमर्हं तस्मान्निद्राद्रुगिति यत्प्रयुज्यते तत्प्रामादिकमेव ॥ ८८ ॥

## निष्यन्द इति षत्वं चिन्त्यम् ॥ ८९ ॥

"स्यन्दू प्रस्रवणे" इति धातोर्निःस्यन्द इति भवति न निष्यन्द इति । तस्मादत्र षत्वमयुक्तम् । कस्कादिषु पाठादिति चेन्न । कस्कादिष्वस्याभावात् अत एव सूत्रे चिन्त्यमिति कथनम् ॥ ८९ ॥

## नाङ्गुलिसङ्ग इति मूर्धन्यविधेः ॥ ९० ॥

"समासेऽङ्गुलेः सङ्ग" इत्यनेन मूर्धन्यषकारविधानादङ्गुलिसङ्ग इति न युक्तम् । अङ्गुलिषङ्ग इति पाणिनिप्रयोगात् ॥ ९० ॥

**तेनावन्तिसेनादयः प्रत्युक्ताः ॥ ६१ ॥**

तेनेत्यनेन षत्वप्रकरणं निर्दिश्यते। सुषामादिषु—"एति संज्ञायामगात्" इत्यनेन मूर्धन्यविधानादवन्तिसेनादयः शब्दाः प्रयोक्तुमनर्हा एव। षत्वेनैवैषु भाव्यमिति भाव ॥ ६१ ॥

**नेन्द्रवाहने णत्वमाहितत्वस्याविवक्षितत्वात् ॥६२॥**

इन्द्रवाहनमिति प्रयोगे वाहनमाहितादित्यनेन न णत्वं कुत इति चेदाहितत्वस्याविवक्षितत्वात्। आरोप्य यदुह्यते तदाहितमित्युच्यते यथेक्षुवाहणमिति। स्वस्वामिभावमात्रविवक्षितत्वादत्र तु तन्न। इन्द्रस्वामिकं वाहनमिन्द्रवाहनम्। वहतेल्युटि वृद्धिरिहैव सूत्रे निपातनात् ॥ ६२ ॥



इति श्रीमदार्यवर्यजगज्जीवनसूनोः श्रीलसरस्वतीदेवीनन्दनस्य श्रीपण्डितसत्यव्रताग्रजस्य महाकविश्रीमन्मुनिमेधाव्रताचार्यस्य कृतौ व्रतिमङ्गलायां यास्कीयकाव्यालङ्कारसूत्रवृत्तौ शब्दशुद्धिविवेचनं नाम द्वादशोऽध्यायः ॥ १२ ॥

॥ ग्रन्थो गतोऽवसितिमेष प्रभुसत्कृपातः ॥

# हमारे प्रकाशन

| क्रम | पुस्तक | लेखक | मूल्य |
|---|---|---|---|
| १. | बलिदान ( सचित्र ) | ( भगवान्देव आचार्य, वेदव्रत शास्त्री ) | १२.०० |
| २. | मनोविज्ञान तथा शिव सङ्कल्प | ( स्वामी आत्मानन्द सरस्वती ) | ३.५० |
| ३. | कन्या और ब्रह्मचर्य | ( „ „ „ ) | .२० |
| ४. | आदर्श ब्रह्मचारी | ( „ „ „ ) | .२५ |
| ५. | विदेशों में एक साल | ( स्वामी स्वतन्त्रानन्द ) | २.०० |
| ६. | वेद-प्रवेश ( सम्पूर्ण ) | ( स्वामी वेदानन्द ) | २.५० |
| ७. | संस्कृताङ्कुर | ( „ „ ) | १.०० |
| ८. | संस्कृत कथामंजरी | ( „ „ ) | .३० |
| ९. | हम संस्कृत भाषा क्यों पढ़ें | ( „ „ ) | .५० |
| १०. | पञ्चमहायज्ञविधि की व्याख्या | ( „ „ ) | १.०० |
| ११. | विरजानन्द चरित | ( „ „ ) | १.५० |
| १२. | आर्य-सामाजिक धर्म | ( „ „ ) | .७५ |
| १३. | संस्कारविधि | ( महर्षि दयानन्द ) | १.२५ |
| १४. | आर्योद्देश्यरत्नमाला | ( „ „ ) | .०६ |
| १५. | गुरुकुल-शतकम् | ( आचार्य मेधाव्रत ) | .५० |
| १६. | ब्रह्मचर्य-शतकम् | ( „ „ ) | .६५ |
| १७. | ब्रह्मचर्य-महत्त्वम् | ( „ „ ) | .५० |
| १८. | विरजानन्दचरितम् | ( „ „ ) | १.०० |
| १९. | नारायणस्वामिचरितम् | ( „ „ ) | .७५ |
| २०. | काव्यालङ्कारसूत्रवृत्ति | ( „ „ ) | १.२५ |
| २१. | छन्दःसूत्र-वृत्ति | ( „ „ ) | २.०० |
| २२. | चारुचरितामृतम् | ( „ „ ) | यन्त्रस्थ |
| २३. | वैदिक धर्म परिचय | ( जगदेवसिंह सिद्धान्ती ) | .६५ |
| २४. | छात्रोपयोगी विचारमाला | ( „ „ ) | .६५ |
| २५. | संस्कृतवाङ्मय का सं० परिचय | ( „ „ ) | .५० |
| २६. | विवाहपद्धति | ( „ „ ) | यन्त्रस्थ |

| | | |
|---|---|---|
| २७. वेद-विमर्श ( प्रथम भाग ) | ( वेदव्रत शास्त्री ) | २.०० |
| २८. आसनों के व्यायाम ( सचित्र | ( " " ) | .६० |
| २९. दैनिक सन्ध्यायज्ञ पद्धति | ( " , ) | .१० |
| ३०. महर्षि दयानन्द जीवन कथा | ( पं० बस्तीराम ) | .५० |
| ३१, असली अमृत गीता | ( " " ) | .४० |
| ३२. आर्य कुमार गीताञ्जलि १—२ भाग | | .४० |
| ३३. मस्तिष्क विद्या ( सचित्र | ( चञ्चल बहिन पाठक ) | ७.०० |
| ३४. वैदिक भारत में यज्ञ | ( मुनि देवराज विद्यावाचस्पति ) | २.०० |
| ३५. दुष्टदमन | ( " " ) | .१२ |
| ३६. राष्ट्र-निर्माण में गुरुकुल का स्थान | ( " " ) | .५० |
| ३७. राष्ट्रनिर्माण में धर्म का स्थान | ( " " ) | .०३ |
| ३८. दृष्टान्तमञ्जरी | ( जगतकुमार शास्त्री ) | २.०० |
| ३९. हित की बातें | ( पं० ठाकुरदत्त शर्मा ) | .१० |
| ४०. काश्मीर यात्रा | ( जगन्नाथ बी० ए० ) | .५० |
| ४१. आर्यसिद्धान्त दीप | ( मदनमोहन विद्यासागर ) | १.२५ |
| ४२. स्वामी आत्मानन्दजी की जीवनी | ( वेदानन्द वेदवागीश ) | .१२ |
| ४३. ब्रह्मचर्य के साधन १—६ भाग | ( आचार्य भगवान् देव ) | ३.०५ |
| ४४. ब्रह्मचर्यामृत | ( " " ) | .१५ |
| ४५. बालविवाह से हानियां | ( " " ) | .०६ |
| ४६. स्वप्नदोषचिकित्सा | ( " " ) | .१५ |
| ४७. बिच्छूविषचिकित्सा | ( " " ) | .१२ |
| ४८. पापों की जड़ ( शराब ) | ( " " ) | .१५ |
| ४९. हमारा शत्रु ( तम्बाकू ) | ( " " ) | .३० |
| ५०. नेत्र रक्षा | ( " " ) | .२० |
| ५१. व्यायाम का महत्त्व | ( " " ) | .२० |
| ५२. राम राज्य कैसे हो | ( " " ) | .२० |
| ५३. सत्यार्थप्रकाश | ( महर्षि दयानन्द ) | २.०० |

प्रकाशक—हरयाणा साहित्य संस्थान, गुरुकुल झज्जर, रोहतक